# NOW WITH EVERY CAKE OF MYSORE SANDAL BABY SOAP, A SOAP-HOLDER FREE!





MYSORE SANDAL BABY SOAP WITH PURE NATURAL SANDALWOOD AND ALMOND OILS




CARES FOR YOUR BABY AS MUCH AS YOU DO!






The house of Mysore Sandal has been bringing the goodness of sandalwood right into your homes for over 80 years.

*Till stocks last. **So hurry!**

FOR GREATER CLEANLINESS AND HYGIENE, TURN TO MYSORE SANDAL BABY SOAP.

A 
ACTIVE

B 
BUZZ BOSS

C 
CADET DX

D 
DEVIL DX

E 
ELEPHANT

F 
FISH

G 
GIRAFFE

H 
HEN

I 
INSECT

J 
JOKER

K 
KIDD DX

L 
LI'L ANGEL LAMBADA LIMBO

M 
MISSILE MISS INDIA Jr

N 
NEST

O 
ORANGE

P 
PIRANHA

Q 
QUEEN Jr

R 

S  
SALSA

T 




V W

The largest range of kids bikes
**HERO CYCLES**
THE ABC OF CYCLING

# एतस्य अङ्कस्य विशेषाः

सम्पुटः - १८ मार्च् - २००२ सञ्चिका - १२



भारतगौरवगाथा २५



स्वार्थी (वेतालकथा) १९



यक्षपर्वतः ११



विघ्नेश्वरः ४५



## अन्तरङ्गम्




**SUBSCRIPTION**

**For USA and Canada**
**Single copy $2**
**Annual subscription $20**
***Remittances in favour of Chandmama India Ltd.***
**to**

Subscription Division
CHANDAMAMA INDIA LIMITED
No. 82, Defence Officers Colony
Ekkatuthangal, Chennai - 600 097
E-mail : subscription@chandamama.org

**उपायनीक्रियताम्**

वायुयानेन भारतेतरदेशान् प्रति
वार्षिकं (१२ सञ्चिकाः) - रू.९००/-
भारते रू. १२०/- (बुक्पोस्ट् द्वारा)
भवदीयं धनं D.D.द्वारा धनादेश(M.O.)द्वारा वा
'Chandamama India Limited'
नाम्ना प्रेषणीयम् ।

विज्ञापिकावानार्थं सम्पर्क्यताम् -
चेन्नै -
Ph - 044-2347384, 2347399
e-mail : advertisements@chandamama.org
देहली -
मोना भाटिया
Ph - 011-6515111/ 6565513/6565516
मुम्बयी -
शर्मीलमुञ्जा
Ph - 022-2661599/ 2661946/2653057

संस्थापकौ –
**चक्रपाणिः नागिरेड्डी च**

# वृष्टिविज्ञाने परिणतिः

अन्यदेशैः इव भारतदेशे अपि उपग्रहाः प्रेषिताः वायुविषये भविष्यं ज्ञापयितुम् । एतेषां द्वारा यत् ज्ञातं तत् आकाशवाण्या दूरदर्शनेन पत्रिकाभिः च प्रसार्यते सामान्यजनानां ज्ञानाय । किन्तु ये सूर्यं वृष्टिं च अवलम्ब्य कृषिं कुर्वन्ति ते कृषिकाः वृष्ट्याद्यागमनं स्वकीयेन एव पारम्परिकक्रमेण जानन्ति । सौभाग्यं नाम तादृशी कला अद्यापि पूर्णतः न विलुप्ता इति ।

एषु दिनेषु सौराष्ट्रवासी कश्चन ग्रामीणः कृषिकः वृष्टेः आगमनकालं स्वकीयपद्धत्या गणयित्वा सूचितवान् । तेन सूचिते एव काले वृष्टिः आगता अपि । सः एतद्विषये गुजरात-कृषिविश्वविद्यालयस्य विज्ञानिनां कृते एकं पत्रम् अपि लिखितवान् आसीत् । वृष्ट्यागमनकालस्य सूचनम् आ बहुभ्यः वर्षेभ्यः कुर्वन् अस्ति सः ।

एतादृशी परम्परा न नश्येत् इत्येतेन उद्देशेन तैः विज्ञानिभिः ४०० कृषिकाणाम् एकः सङ्घः संस्थापितः अस्ति । तेषु केचन गुजरातीयेतराः अपि सन्ति । ते गुजरातविश्व-विद्यालयेन आरब्धस्य संशोधनस्य निमित्तम् अपेक्षितांशदानेन सहकरिष्यन्ति ।

भारते एतादृशं विज्ञानम् आ बहोः कालात् आसीत् । अष्टमशतकीयः वराहमिहीरः द्वादशशतकीयः भाड्ली इत्यादयः तादृशविज्ञाने निपुणेषु अन्यतमाः । वराहमिहिरस्य बृहत्संहिता वदति यत् ऋतुवातस्य आगमनस्य ४५ दिनेभ्यः पूर्वम् एव पीतवर्णीयानि 'आमलता'पुष्पाणि विकसितानि भवन्ति इति । भाड्ली आकाशस्य वर्णपरिवर्तनम् अवलम्ब्य विविधान् सिद्धान्तान् उपस्थापयति ।

मार्च्मासस्य २३तमे दिनाङ्के विश्वखगोलविज्ञानदिनम् आचर्यते । भारतीयैः प्राचीनैः वैज्ञानिकैः जलम्, आकाशं, भूमिं च अधिकृत्य यत् उक्तं अस्ति तस्य स्मरणार्थम् एषः योग्यः कालः ।

सम्पादकः – **विश्वम्**



भारतनायकस्पर्धायां भागम् ऊढ्वा प्राप्नुवन्तु अपूर्वाणि पारितोषिकाणि

# भारतीयाः नायकाः-६

भारतीये इतिहासे युद्धानि अविरलानि । तादृशेषु युद्धेषु भागं गृहीतवतः नायकान् अधिकृत्य अत्रास्ति प्रश्नावली । किं तान् अभिजानीयुः भवन्तः ?

**समुचितोत्तरदातारः त्रयः पुरस्क्रियन्ते द्विचक्रिकादानेन**

1. सः मराठानायकः कः, यः मोगलान् सधैर्यं सम्मुखीकृतवान्, औरङ्गजेबेन गृहीतः अपि सः उपायेन कारागारात् पलायितवान् ?

   ..................................................

2. सः सेनानायकः कः, यश्च १९४९ तमे वर्षे जनवरीमासस्य १५ दिनाङ्के भारतीयसेनायाः 'कमाण्डर् इन् चीफ्'पदवीं 'चीफ् आफ् आर्मी स्टाफ्'पदवीं च युगपत् एव अलङ्कृतवान् ?

   ..................................................

3. सः चोलराजः कः, यश्च वङ्गराजं महीपालं जित्वा गङ्गानद्याः जलं स्वराजधानीं गङ्गैकोण्डचोलपुरं प्रति आनीतवान् ?

   ..................................................

4. भारतीयसैन्यस्य 'फील्ड् मार्षल्'पदं ऐदम्प्राथम्येन कः अलङ्कृतवान् ?

   ..................................................

5. यः प्रथमे मैसूरुयुद्धे जयं प्राप्तवान्, यस्य च पुत्रः पितृसदृशः एव आसीत्, सः कः ?

   ..................................................



प्रतिप्रश्नम् उत्तरं लिखन्तु । एतेषु पञ्चसु नायकेषु प्रियतमः कः किमर्थं च इति दशभिः शब्दैः लिखन्तु । **मम प्रियतमः नायकः** ..................................................

..................................................

..................................................

..................................................

भागग्रहीतुः नाम ..................................................

वयः .................... कक्ष्या ....................

सङ्केतः ..................................................

..................................................

..................................................

पिन् .................... दूरवाणी ....................

एतं पुटं पृथक्कृत्य प्रेषयन्तु अधोनिर्दिष्टसङ्केताय -

**भारतनायकस्पर्धा-६**
**चन्दमामा इण्डिया लिमिटेड्,**
८२, डिफेन्स् आफीसर्स् कालोनी
एक्काट्टुतङ्गल्, **चेन्नै** - ६०० ०९७
उत्तरप्रेषणाय अन्तिमदिनाङ्कः - ५, एप्रिल् - २००२

***नियमाः -***

१. अधिकाष्ट-ऊनचतुर्दशवर्षीयाः एतस्यां स्पर्धायां भागं ग्रहीतुम् अर्हन्ति ।
२. विविधभाषाभिः प्रेषितानि उत्तराणि परिशील्य त्रयः श्रेष्ठाः चीयन्ते । यदि योग्योत्तरदातारः बहवः तर्हि प्रियतमनायकेविषये लिखितं वाक्यम् अवलम्ब्य चयनं क्रियते ।
३. निर्णायकानां निर्णयः एव अन्तिमः ।
४. एतं विषयम् अधिकृत्य पत्रव्यवहारः कोऽपि न करणीयः ।
५. विजेतारः पत्रद्वारा सूच्यन्ते ।

***भवद्भ्यः पारितोषिकं ददाति***





# वीरबाहोः संन्यासव्रतम्

योगपुरे वीरबाहुनामकः कश्चन निर्धनः वसति स्म । तस्य गृहे तदीया माता, पत्नी, पुत्राः च आसन् । सः महान्तं परिश्रमं करोति स्म । किन्तु तेन सः कुटुम्बपोषणं कर्तुं न शक्नोति स्म । अतः खिन्नः सः संन्यास-ग्रहणं कर्तुं निश्चयं कृतवान् । तदर्थम् अरण्ये स्थितस्य मठायतनस्य दिशि प्रस्थितवान् सः ।

दुःखितः सः शिरः अवनमय्य अरण्ये गच्छन् आसीत् । मार्गे तेन कश्चन धनस्यूतः दृष्टः । सः स्यूतं स्वीकृत्य - 'मम संन्यास-स्वीकरणविचारः वनदेव्यै न अरोचत इति भाति । तदर्थं मार्गे धनस्यूतं पातितवती अस्ति सा । इतःपरं गृहं गत्वा सुखेन जीवनं यापयिष्यामि' इति विचिन्त्य गृहस्य दिशि प्रस्थितवान् ।

अनुक्षणं 'तिष्ठतु' इति कश्चन स्वरः श्रुतः । वीरबाहुः भयेन परिवृत्य दृष्टवान् । दृढकायौ द्वौ पुरुषौ तत्र स्थितवन्तौ आस्ताम् । तयोः हस्ते तीक्ष्णा छुरिका आसीत् । छुरिकां दृष्ट्वा वीरबाहुः भीतः । तौ चोरौ निकटस्थे ग्रामे चौर्यं कृतवन्तौ आस्ताम् । चौर्यं कृत्वा प्रत्यागमनसमये एकः धनस्यूतः मार्गे पतितः आसीत् । तं स्यूतम् अन्विष्यन्तौ तौ प्रत्यागच्छन्तौ आस्ताम् । वीरबाहोः हस्ते ताभ्यां धनस्यूतः दृष्टः । तौ वीरबाहोः समीपम् आगत्य - ''विना वचनं स्यूतं ददातु । एतत् धनं चोरयितुम् आवां महान्तं परिश्रमं साहसं च कृतवन्तौ । तादृशं धनं भवान् स्वायत्तीकर्तुं न अर्हति'' इति तर्जितवन्तौ ।

वीरबाहुः भयेन कम्पमानः स्यूतं चोरयोः हस्ते दत्त्वा - ''आर्यौ, एषा भवतोः सम्पत् इति अहं न जानामि स्म । मया जीवने नाना-विधानि कष्टानि अनुभूतानि सन्ति । तथापि कुटुम्बपोषणं कर्तुं न शक्तं मया । अतः संन्यासदीक्षां स्वीकर्तुं मठं प्रति प्रस्थितवान् आसम् । तदा एव मार्गे मया एषः धनस्यूतः प्राप्तः । 'मम कष्टानि निवारयितुं वनदेवतया धनस्यूतः उपायनीकृतः' इति भावितवान्

अहम्'' इति उक्तवान् ।

तस्य वचनं श्रुत्वा चोरौ उपहासपूर्वकं – ''किं वनदेवी भवते उपायनं ददाति ? मूर्खः भवान् । एतादृशान् दुर्बलविचारान् मस्तिष्कात् निष्कासयतु । वामतः गच्छति चेत् मठः दृश्यते । एतावता संन्यासिनः भिक्षाटनार्थं गतवन्तः स्युः । तत्र गत्वा भवान् अपि भिक्षाटनं करोतु'' इति उक्त्वा ततः निर्गतौ ।

चोराणां वचनं श्रुत्वा वीरबाहोः मनसि संन्यासिनां विषये घृणा उत्पन्ना । सः मनसि – 'अहं कृषिकार्यं जानामि । हलचालनं जानामि । परिश्रमं कर्तुं शक्नोमि । एवं सति मया किमर्थं भिक्षाटनं करणीयम् ? तदपि उदरपूरणार्थम् !! एते संन्यासिनः अपि कीदृशाः ? उदरपूरणाय भिक्षाटनं कुर्वन्तः भवन्ति । दायित्वात् मुक्ताः भूत्वा पलायनं कर्तुम् इच्छुकाः एते पलायनवादिनः । अतीव अलसाः एते' इति चिन्तयन् गृहस्य दिशि प्रस्थितवान् ।

वीरबाहोः माता चिन्ताक्रान्तं पुत्रं दृष्ट्वा पृष्टवती – ''पुत्र ! का चिन्ता भवतः ? चिन्ताक्रान्तः इव दृश्यते भवान्'' इति ।

वीरबाहुः प्रवृत्तं सर्वं विस्तरेण उक्तवान् । तदा माता पुत्रे धैर्यं पूरयन्ती – ''सम्यक् अभवत् । अन्तिमक्षणे भगवान् भवतः बुद्धिं स्थिरां कृतवान् । यथा भवान् मार्गभ्रष्टः न भवेत् तथा कृतवान् अस्ति सः । ते संन्यासिनः कथं जीवन्ति इति किं भवान् जानाति ? अस्मादृशाः गृहस्थाः दयया यत् यच्छन्ति तदाधारेण जीवन्ति ते । परावलम्बिनः ते । स्वीकर्तुः अपेक्षया दाता श्रेष्ठः इति स्मरतु । समाजे सर्वदा दातॄणाम् एव आदरः भवति । अग्रे कदापि संन्यासस्वीकरणस्य विचारः भवतः मनसि मा भवतु'' इति उक्तवती ।

उद्विग्नः वीरबाहुः – ''किम् अहं तावत् अपि ज्ञातुम् अनर्हः इति भवत्याः भावना ?'' इति कोपेन उक्तवान् ।

तदा माता उक्तवती – ''जानन् अपि किमर्थं संन्यासं स्वीकर्तुम् इष्टवान् भवान् ? किम् एषा एव भवतः बुद्धिमत्ता ? इतोऽपि पञ्चषवर्षाणि यावत् परिश्रमं करोतु । तावता भवतः पुत्रौ अपि प्रौढौ भवतः । तयोः अपि सहयोगं प्राप्स्यति भवान् । तदा सर्वे अपि सुखेन जीवनं यापयितुं शक्ष्यामः'' इति ।



## Statement about Ownership of CHANDAMAMA (Sanskrit)

Rule 8 (FormVI), Newspaper (Central) Rules, 1956

| | |
|---|---|
| 1. Place of Publication | 82 Defence Officers Colony<br>Ekkatuthangal<br>Chennai-600 097 |
| 2. Periodicity of Publication | MONTHLY<br>1st of each calendar month |
| 3. Printer's Name<br>Nationality<br>Address | B. VISWANATHA REDDI<br>INDIAN<br>82 Defence Officers Colony<br>Ekkatuthangal<br>Chennai-600 097 |
| 4. Publisher's Name<br>Nationality<br>Address | B. VISWANATHA REDDI<br>INDIAN<br>82 Defence Officers Colony<br>Ekkatuthangal<br>Chennai-600 097 |
| 5. Editor's Name<br>Nationality<br>Address | B. VISWANATHA REDDI (Viswam)<br>INDIAN<br>82 Defence Officers Colony<br>Ekkatuthangal<br>Chennai-600 097 |
| 6. Name and Address of individuals who own the paper | Chandamama India Ltd.<br>Board of Directors:<br>1. P. Sudhir Rao<br>2. Vinod Sethi<br>3. B. Viswanatha Reddi<br>82 Defence Officers Colony<br>Ekkatuthangal<br>Chennai-600 097 |

*I,* **B. Viswanatha Reddi,** *do hereby declare that the particulars given above are true to the best of my knowledge and belief.*

1st March 2002

B. VISWANATHA REDDI
*Publisher*

ORISSA

*The soul of India*

अत्रास्ति प्रश्नावली !!

# सिमिलपालम्

यदि भवन्तः एकस्मिन् एव प्रदेशे निवसतः शताधिकान् व्याघ्रान् द्रष्टुम् इच्छन्ति तर्हि सिमिलपालराष्ट्रियोद्यानं तदर्थं योग्यं स्थलम् । ओरिस्साराज्ये मयूरभञ्जजनपदे व्याघ्ररक्षणाङ्कतया प्रथमं राष्ट्रियोद्यानं स्थापितम् अभवत् सिमिलपाले एव । २०५० चतुरस्र कि.मी. विस्तीर्णयुतम् एतत् उद्यानं भवतां मनः तर्पयेत् एव ।

सिमिलपालीयः उद्यानप्रदेशः विविधैः सस्य-प्रकारैः पूर्णः । एतस्मिन् उद्याने द्वादश नद्यः प्रवहन्ति । उद्यानस्य एतस्य वैशाल्यकारणतः एकस्मिन् एव उद्याने विभिन्नवातावरणभेदाः परिलक्ष्यन्ते । एतस्मात् एव कारणात् अनेकविधाः प्राणिवर्गाः, सस्यवर्गाः च प्राप्यन्ते अत्र ।

वन्यपशुप्रियाः अत्र गजान्, तरक्षून्, मकरान्, विविधजातीयान् सर्पान् च द्रष्टुम् अर्हन्ति अत्र । पक्षिप्रियैः अपि आनन्दः प्राप्येत एव । यतः अत्र २३० विधाः पक्षिणः दृष्टिगोचराः भवन्ति । अतः यदि एतत् स्थलं प्रति गमनविचारः भवतां स्यात् तर्हि दूरसूक्ष्मदर्शकस्य नयनं मा विस्मरन्तु ।

परिसरप्रियैः अपि अत्र द्रष्टव्यानि सन्ति बहूनि । उद्यानस्थानां पर्वतानां, खातानां, जल-पातानां च सौन्दर्यं निश्चयेन अस्ति आस्वादनयोग्यम् । सिमिलपालराष्ट्रियोद्याने एव बरेहीपानी, जोराण्डा, चहाला, नवाना इत्यादिषु केषुचित् प्रदेशेषु विश्रामादिनिमित्तम् उत्तमाः व्यवस्थाः परिकल्पिताः दृश्यन्ते ।

---

## प्रश्नोत्तरस्पर्धा भवदर्थम् !

**ऊनचतुर्दशवर्षीयाः अत्र भागं वोढुम् अर्हाः !!**

**प्रश्नावली - ७**

१. भारते कति व्याघ्रसंरक्षणास्थलानि सन्ति ?

..........................................................

२. सिमिलपालराष्ट्रियोद्याने मकरपोषणस्थलम् अपि किञ्चन अस्ति । तस्य स्थलस्य नाम किम् ?

..........................................................

३. ओरिस्साराज्यं यत्र पूर्वपर्वतावलीं द्विधा करोति तत्र स्थितस्य वन्यपशुधाम्नः नाम किम् ?

..........................................................

भवताम् उत्तराणि रिक्ते स्थले लिखित्वा नाम-सङ्केतादिभिः अधस्तनं विवरणपत्रं प्रपूर्य अधोनिर्दिष्ट-सङ्केताय प्रेषयन्तु -

**Orissa Tourism Quiz Contest**
**Chandamama India Limited**
**No. 82, Defence Officers Colony**
**Ekkatuthangal, Chennai - 600 097**

नाम - ..........................................

वयः - ..........................................

सङ्केतः - ..........................................

..........................................

Pin : .............. Phone ..................



Winners picked by Orissa Tourism in each contest will be eligible for **3 days, 2-night** stay at any of the **OTDC Panthanivas**, upto a maximum of four members of a family. Only original forms will be entertained. The competition is not open to CIL and Orissa Tourism family members. Orissa Tourism, Paryatan Bhaven, Bhubaneswar - 751 014. Ph: (0674) 432177 Fax : (0674) 430887, e-mail : ortour@sancharnet.in. Website : Orissa-tourism.com



# यक्षपर्वतः

## १२

*(खड्गवर्मा जीवदत्तः मणिभूषणः च यत्र आसन् तत्र एका राक्षसी आगता । तस्याः पत्युः द्वारा जीवदत्तः यक्षपर्वतसम्बद्धं रहस्यं ज्ञातवान् । ते तत्रैव सुप्तवन्तः । मध्यरात्रे कमपि शब्दं श्रुत्वा मणिभूषणः जागरणं प्राप्तवान्, भीत्या उच्चैः आक्रन्दनं कृतवान् च । तदनन्तरम् ......)*

मणिभूषणस्य आक्रन्दनतः जीवदत्तस्य निद्रा भग्ना । सः मणिभूषणे धैर्यं पूरयन् उक्तवान् – ''भोः मणिभूषण ! अलम् आक्रन्देनेन । भीतिः प्राप्तव्या नास्ति । यौ राक्षसौ आगतौ आस्तां ताभ्यां ज्ञातं यत् भवान् मणिरञ्जितः न इति । मणिरञ्जितस्य सेवकः मणिभूषणः भवान् इति आवाभ्यां तौ उक्तौ । आवयोः वचने विश्वासं प्राप्य तौ इतः निर्गतौ'' इति ।

एतदनन्तरं मणिभूषणः निद्रां कर्तुं बहुधा प्रयत्नं कृतवान् । तथापि तेन निद्रा न प्राप्ता । अतः सः निद्रां विनैव रात्रिं यापितवान् । प्रातःकाले खड्गवर्मा जीवदत्तः च उत्थितवन्तौ । ततः ते त्रयः नौकायाम् उपविष्टवन्तः । मणिभूषणः मन्दं मन्दं स्वस्य नौकाम् अग्रे नीतवान् ।

ततः अर्धघण्टायाः अनन्तरं नदीतीरे नौका स्थगिता । नौकातः अवतरन् मणिभूषणः तौ उक्तवान् – 'एषः एव यक्षपर्वतः नाम । भवन्तौ नौकातः अवतरताम् । भवतोः मेलनार्थं मणिरञ्जितः अत्र स्वयम् उपस्थितः अस्ति'' इति ।



खड्गवर्मा जीवदत्तः च पर्वतदिशि दृष्टिं प्रसारितवन्तौ । तत्र उन्नतशिलायाः उपरि स्थितः कश्चन युवकः ताभ्यां दृष्टः । तस्य हस्ते एका गदा आसीत् । सः गाम्भीर्येण स्थित्वा निर्निमेषदृष्ट्या खड्गवर्माणं जीवदत्तं च पश्यन् आसीत् ।

त्रयः अपि तस्य समीपं गतवन्तः । सः खड्गवर्माणं जीवदत्तं च तीक्ष्णदृष्ट्या पश्यन् उक्तवान् - ''भोः, भवतोः दुस्साहसं दृष्टवतः मम आश्चर्यं भवति । जानन्तौ अपि भवन्तौ किमर्थम् अपायगर्ते पततः इति मया न ज्ञायते'' इति ।

जीवदत्तः मणिरञ्जितं नखशिखान्तं पश्यन् उक्तवान् - ''मणिरञ्जित ! पद्मावत्याः आशयः अस्ति यत् अत्रत्यं शिलारथं यः कम्पयितुं शक्नोति सः एव महावीरः इति । भवतः योजना अस्ति यत् तस्मिन् कार्ये उद्यतस्य वधः करणीयः इति । किन्तु स्मरतु, भवतः एषा योजना एव भवन्तं यमसदनं प्रेषयिष्यति । पद्मावती वसन्तकुमारी च कुत्र स्तः इदानीम् ?'' इति ।

तस्य वचनं श्रुत्वा मणिरञ्जितः क्रोधाविष्टः जातः । सः गदां यदा उन्नेतुम् उद्युक्तः तदा खड्गवर्मा खड्गं हस्तेन गृह्णन् उक्तवान् - ''मणिरञ्जित ! यदि वयं शिलामयरथं कम्पयितुं न शक्नुयाम तर्हि भवान् गदाम् उन्नेतुम् अर्हति । यदि वयम् असफलाः स्याम तर्हि पद्मावती भवन्तं महावीरं मत्वा परिणयेत् । अतः आदौ तं शिलारथं दर्शयतु तावत्'' इति ।

मणिरञ्जितः यावत् किमपि वक्तुम् उद्युक्तः तावता मणिभूषणः उक्तवान् - ''मणिरञ्जित ! अलं त्वरया । एतौ युवकौ आदौ शिलारथस्य समीपं नयतु'' इति । अतः मणिरञ्जितः तौ आत्मना सह अग्रे नीतवान् ।

ततः अल्पे एव काले ते एकं समतलप्रदेशं प्राप्तवन्तः । स च प्रदेशः फलैः पुष्पैः च युक्तैः वृक्षैः पूर्णः आसीत् । तस्मिन् उद्याने रथाकारके उभे भवने आस्ताम् । तयोः अन्यतरस्य भवनस्य उपरि उभे सुन्दर्यौ युवती स्थितवत्यौ आस्ताम् । खड्गवर्मजीवदत्तौ दृष्टवत्योः तयोः मुखे आनन्दसूचकः मन्दहासः उत्पन्नः ।

जीवदत्तः ते युवती पश्यन् अपृच्छत् - ''मणिरञ्जित ! वसन्तकुमारी पद्मावती च खलु तत्र दृश्येते ?'' इति ।

''आम्, भवतोः पराक्रमं द्रष्टुं ते उत्सुके

स्तः, अतः तत्र स्थिते स्तः'' इति उक्त्वा शिलारथं प्रदर्शयन् सः पुनः उक्तवान् - ''तत्र यः दृश्यते सः एव शिलारथः'' इति ।

स च विंशतिपादमितोन्नतः रथः । पर्वतस्पर्शितया एव आसीत् सः । रथस्य दिशि गच्छन्तौ तौ मणिरञ्जितं मणिभूषणं च किमपि वक्तुं मुखं परिवर्तितवन्तौ । आश्चर्यं नाम तत्र मणिभूषणः न आसीत् ।

किमपि अनुक्त्वा मणिभूषणः ततः निर्गतः आसीत् । एतत् तयोः मनसि आश्चर्यम् अजनयत् । मणिरञ्जितः अपि रथसमीपम् आगतवान् । जीवदत्तः खड्गवर्मा च तं रथं परितः इतस्ततः भ्रमन्तौ सम्यक् परिशीलितवन्तौ ।

जीवदत्तः अवनम्य रथस्य अधोभागं परिशील्य खड्गवर्माणम् अवदत् -''खड्गवर्मन् ! एषः रथः पर्वतमूले शिलाः मेलयित्वा रचितः । एतस्य अधोभागतः कश्चन क्षीणप्रकाशः निस्सरति, अस्पष्टध्वनयः अपि श्रूयन्ते । मानवानां सम्भाषणध्वनिः इव भासते सः'' इति ।

जीवदत्तस्य वचनं श्रुत्वा मणिरञ्जितः सर्पेण दष्टः इव दिग्भ्रान्तः । सः जीवदत्तम् अवदत् - ''किं रथस्य अधः प्रकाशरेखा दृश्यते ? किं मानवानां ध्वनिः श्रूयते ? सर्वथा असम्भवम् एतत्'' इति ।

''कथम् असम्भवं भवितुम् अर्हति ? पर्वते स्थितानां सुवर्णरत्नादीनाम् उत्पाटनार्थं नियोजिताः सर्वे मूकाः भवितुम् अर्हन्ति किम् ?'' इति कठोरस्वरेण अपृच्छत् जीवदत्तः ।



एतत् श्रुत्वा मणिरञ्जितः निर्वचनः जातः । सः जीवदत्तम् आश्चर्येण अपृच्छत् - ''एतत् रहस्यं कथं ज्ञातं भवता ? को वा भवन्तम् एतत्सर्वम् उक्तवान् ? मणिभूषणः एव प्रायः प्रयाणसमये एतत् रहस्यं भवन्तौ उक्तवान् स्यात्'' इति ।

''मणिभूषणविषये सन्देहः मास्तु भवतः । सः तु भवद्वचनानुवर्ती । सः भवतः सुहृत्, उत सेवकः इति अद्यावधि न ज्ञातम् आवाभ्याम् । आवां तु दिव्यदृष्ट्या यक्षपर्वतसम्बद्धं रहस्यं ज्ञातवन्तौ स्वः'' इति हसन् अवदत् जीवदत्तः ।

एतत् श्रुतवतः मणिरञ्जितस्य मुखम् आरक्तं जातम् । ''जीवदत्त ! अलं विकत्थनेन । रथस्य विचालने प्रयत्नः भवतु । विचालनं कर्तुं शक्यते वा न वा इति पश्याम तावत् ।

भवतः शक्तिसामर्थ्यादिकं द्रष्टुं पद्मावती वसन्तकुमारी च भवने स्थित्वा प्रतीक्षमाणे स्तः । तयोः ह्रासपात्रतां प्राप्तुं क्षणः सन्निहितः अस्ति'' इति अवदत् सः ।

जीवदत्तः खड्गवर्माणं नेत्रसङ्केतेन एव किमपि संसूच्य रथाकारं भवनद्वयं प्रदर्शयन् मणिरञ्जितम् अपृच्छत् - ''यस्य भवनस्य उपरि राजकुमार्यौ स्तः तस्य पार्श्वे यत् भवनम् अस्ति तत् भवतः वासगृहम् एव किल ?'' इति ।

''आम् । किन्तु अयम् प्रश्नः इदानीं किमर्थं पृच्छ्यते भवता ?'' इति अपृच्छत् मणिरञ्जितः ।

''तच्च भवनम् अचिरात् एव स्फोटितं भविष्यति । एतस्य शिलारथस्यापि सा एव गतिः'' इति वदन् जीवदत्तः मन्त्रोच्चारणं कुर्वन् स्वस्य दण्डं शिलारथस्य उपरि स्थापितवान् । ततः तं पादेन प्रहृतवान् च ।

अनन्तरक्षणे एव शिलारथे चलनम् आगतम् । सः अग्रे सरन् मणिरञ्जितस्य भवनेन घट्टितः जातः । एतेन शिलारथः मणिरञ्जितभवनम् अपि भग्नौ । उभयोः अपि खण्डाः उद्याने सर्वत्र पतिताः ।

स्वनेत्रयोः पुरतः एव जातम् एतं सर्वनाशं दृष्ट्वा मणिरञ्जितः आश्चर्येण मूकः जातः । सः स्वप्ने अपि न चिन्तितवान् आसीत् यत् एतादृशं किमपि घटते इति । सः जीवदत्तं मारयितुं गदाम् उन्नीतवान् । किन्तु तावता खड्गवर्मा स्वस्य खड्गं हस्तेन गृहीत्वा तस्य पुरतः उपस्थितः ।

जीवदत्तः नितरां सन्तुष्टः आसीत् । सः वसुमतिनामकेन गन्धर्वेण दत्तां कांस्यढक्कां गृहीत्वा वादनम् आरब्धवान् । तदनन्तरक्षणे एव शिलारथः यत्र आसीत् तत्र शिलायाः



अपसरणं दृष्टम् । ततः एकं बिलं दृष्टिगोचरं जातम् । तस्मात् बिलतः केचन राक्षसाः गन्धर्वाः च बहिः आगताः । ते उच्चैः कोलाहलं कुर्वन्ति स्म ।

''सर्वे तूष्णीं तिष्ठन्तु'' इति तान् संसूच्य जीवदत्तः तान् अवदत् – ''एतस्मात् क्षणात् भवन्तः सर्वे स्वतन्त्राः । अतः भवन्तः स्वगृहं गन्तुम् अर्हन्ति'' इति ।

ततः सः कांस्यढक्कां वादयन् पुनः अवदत् – ''एतां ढक्कां वसुमतिनामकः गन्धर्वः मह्यम् उपायनीकृतवान् आसीत् । भवत्सु ये गन्धर्वाः सन्ति तेषु अन्यतमः आगत्य एतां ढक्कां स्वीकर्तुम् अर्हति'' इति ।

एकः गन्धर्वः उत्साहेन अग्रे आगत्य सन्तोषेण तां ढक्कां जीवदत्तस्य हस्ततः स्वीकृतवान् । मणिरञ्जितस्य बन्धनात् विमुक्ताः गन्धर्वाः राक्षसाः च जीवदत्तं किमपि वक्तुं यावत् उद्युक्ताः तावता मणिरञ्जितस्य चीत्कारः अनतिदूरे श्रुतः ।

जीवदत्तः मुखं परिवृत्य दृष्टवान् । खड्गवर्मा मणिरञ्जितं पराजित्य तं भूमौ पातयित्वा तस्य कण्ठदेशे स्वस्य खड्गं स्थापयित्वा स्थितः आसीत् ।

एतत् दृश्यं दृष्ट्वा जीवदत्तः उच्चैः हसितवान् । तदा खड्गवर्मा जीवदत्तम् अवदत् – ''जीवदत्त ! एषः दुष्टः मणिरञ्जितः मारणीयः उत विमोक्तव्यः ? एषः राजकुमार्यौ अपहरन् न केवलं ते खेदितवान्, अपि तु तयोः मातापितॄन् अपि पीडितवान् । अतः किं करणीयं मया ?'' इति ।

तावता राजकुमारी पद्मावती वसन्तकुमारी



च तत्र आगते । वसन्तकुमारी मणिरञ्जितं पश्यन्ती उक्तवती – ''मया प्रतिज्ञा कृता आसीत् यत् यः एतं दुष्टं मारयिष्यति तमेव अहं परिणेष्यामि इति । यदि एतस्य मरणम् अहं न द्रक्ष्यामि तर्हि आजीवनम् एवम् एव ब्रह्मचारिणीरूपेण स्थास्यामि । एषा मम प्रतिज्ञा'' इति ।

खड्गवर्मा वसन्तकुमारीम् अवधानपूर्वकं दृष्टवान् । तस्याः अपूर्वं सौन्दर्यं दृष्ट्वा सः व्यामुग्धः जातः । 'एतस्य मारणं कृतं चेदेव अहम् एतां सौन्दर्यवतीं परिणेतुम् अर्हामि' इति चिन्तितवान् सः खड्गम् उन्नीय मणिरञ्जितस्य शिरः छेत्तुम् उद्युक्तः । किन्तु तावता कश्चन ध्वनिः श्रुतः – ''अलं साहसेन'' इति । सर्वे आश्चर्यचकिताः सन्तः मुखम् उन्नीय दृष्टवन्तः ।



हंसाकारकं वायुयानं तेषां पुरतः आगत्य अतिष्ठत् । तस्मात् यक्षराजः मणिभूषणः च अवतीर्णौ ।

यक्षराजः सर्वान् पश्यन् उक्तवान् – ''खड्गवर्मजीवदत्तौ ! भवन्तौ असमानशूरौ इत्यत्र नास्ति सन्देहः । भवतोः विषये मणिभूषणः सर्वं माम् उक्तवान् अस्ति । एषः मणिरञ्जितः यक्षकुलस्य कलङ्कः । तस्य मारणं न युक्तम् । एतं सजीवं त्यजतु । एषः जीवन् अपि मृतप्रायः एव'' इति ।

इदानीं किं करणीयम् इति न ज्ञातं खड्गवर्मणा । तदा जीवदत्तः उक्तवान् – ''यक्षराजस्य आदेशः श्रुतः खलु ? अतः मणिरञ्जितविषये क्षमां दर्शयन् तं त्यजतु तावत्'' इति ।

''एवं तर्हि वीपुरराजकुमार्याः प्रतिज्ञायाः का गतिः स्यात् ?'' इति पृष्टवान् खड्गवर्मा जीवदत्तं राजकुमारीं च कटाक्षेण पश्यन् ।

वसन्तकुमारी लज्जातिशयं प्राप्य पद्मावत्याः पृष्ठतः स्थितवती । तदा यक्षराजः मन्दहासपूर्वकम् उक्तवान् – ''अहं पूर्वम् एव उक्तवान् अस्मि खलु – एषः जीवन् अपि मृतप्रायः इति । अतः वसन्तकुमार्याः प्रतिज्ञायाः भङ्गस्य न काऽपि आपत्तिः सम्भाव्यते । अहम् इदानीं शिलारथं विचालितवतः जीवदत्तस्य पद्मावत्याः च विवाहं, तथैव खड्गवर्मवसन्तकुमार्योः च विवाहं चापि निर्वर्तयिष्यामि । स्वीकुर्वन्तु एताः पुष्पमालाः'' इति ।

मणिभूषणः विमानतः चतस्रः पुष्पमालाः आनीतवान् । एकैकस्मै एकैकां दत्तवान् च । पद्मावती जीवदत्तः च परस्परयोः कण्ठे मालाम् अर्पितवन्तौ । खड्गवर्मा वसन्तकुमारी चापि तथैव कृतवन्तौ । हर्षध्वनिना स च प्रदेशः प्रतिध्वनितः जातः ।

अद्यावधि ये मणिरञ्जितेन दासत्वेन बद्धाः आसन् ते गन्धर्वाः राक्षसाः च एकैकशः आगत्य खड्गवर्माणं जीवदत्तं च कृतज्ञतापूर्वकं नमस्कृतवन्तः ।

जीवदत्तः अवगतवान् यत् एते किमपि वक्तुम् इच्छन्ति इति । अतः सः तान् पृष्टवान् – ''किं वक्तुम् इच्छन्ति भवन्तः ? कृपया वदन्तु'' इति ।

तदा एकः गन्धर्वः अग्रे आगत्य अवदत् – ''महावीरौ ! अहम् अस्मि दास्यं गतानां गन्धर्वाणां नायकः । एतस्मिन् पर्वते सुवर्णरत्नादयः अपारप्रमाणेन सन्ति । अतः तानि अस्मदधीनानि भवन्तु इति प्रार्थयामहे

वयम्'' इति ।

एतत् श्रुत्वा खड्गवर्मा जीवदत्तः च परस्परं मुखं दृष्टवन्तौ । ततः खड्गवर्मा मन्दहासपूर्वकम् उक्तवान् - ''गन्धर्वनायके यादृशी इच्छा उत्पन्ना तादृशी एव इच्छा यदि राक्षसनायके अपि उत्पन्ना स्यात् तर्हि गन्धर्वराक्षसयोः युद्धं प्रचलेत् खलु'' इति ।

तदा राक्षसनायकः विनयेन उक्तवान् - ''प्रभो, बहूनि वर्षाणि यावत् वयं सर्वे दास्ये आस्म । कष्टानि सुखानि च सहैव सोढम् अस्माभिः । कदापि वयं परस्परकलहं न कृतवन्तः । कस्मिंश्चिदपि विषये विवादः न आसीत् । परस्परमैत्र्या वयं जीवितवन्तः । अतः गन्धर्वाः सुवर्णारत्नादीनि स्वीकर्तुम् इच्छन्ति चेत् वयं सहर्षम् अङ्गीकारं सूचयामः । ते तानि स्वीकुर्वन्तु । एतस्य प्रदेशस्य स्वाम्यम् अस्माकं भवतु'' इति ।

तस्य एतत् वचनं श्रुत्वा आश्चर्यम् अनुभूतवन्तौ खड्गवर्मा जीवदत्तः च । जीवदत्तः यक्षराजम् अवदत् - ''एषः समग्रः प्रदेशः भवदधीनः एव खलु । एवं स्थिते एतं प्रदेशं वयं कथम् अन्येभ्यः दातुं शक्नुयाम ?'' इति ।

तदा यक्षराजः राक्षसनायकम् अवदत् - ''अहं सन्तोषेण एतस्य प्रदेशस्य स्वाम्यं भवते अर्पयन् अस्मि । इतः परम् अयं प्रदेशः भवताम् अधीनः'' इति ।

ततः सः खड्गवर्माणं, जीवदत्तं, तयोः पत्न्यौ च - 'विमाने उपविशन्तु' इति सूचयित्वा अवदत् - ''एतस्मिन् विमाने उपविश्य यत्र इच्छा तत्र गच्छन्तु भवन्तः । मासं यावत् एतत् विमानं भवताम् अधीनं भविष्यति । यथा आवश्यकं तथा एतस्य उपयोगं कुर्वन्तु भवन्तः । मासानन्तरम् एतत् प्रत्यर्पयन्तु । भवतां सर्वेषां कल्याणं भवतु'' इति ।

''नितराम् उपकृताः स्मः वयम् । आशीर्वादेन अनुगृह्णातु अस्मान्'' इति उक्त्वा ते सर्वे यक्षराजं नमस्कृतवन्तः ।

ततः ते सर्वे यदा विमाने उपविष्टाः तदा विमानं वीरपुरं प्रति वायुवेगेन प्रस्थानम् अकरोत् ।

- *(समाप्तम्)*



# आदरप्रदर्शनम्

कस्मिंश्चित् ग्रामे पुरुषोत्तमशर्मा नाम कश्चन पण्डितः निवसति स्म । सः बहूनि शास्त्राणि अधीतवान् आसीत्, महाविद्वान् आसीत् च । दूरग्रामे वसन् रघुपतिः कदाचित् तं द्रष्टुम् आगतवान् । सोऽपि विद्वान् एव आसीत् ।

मध्याह्ने भोजनानन्तरम् उभौ अपि गृहस्य पुरतः उपविश्य शास्त्रविषयकवार्तालापं कुर्वन्तौ आस्ताम् । तत्समये कश्चन काष्ठविक्रेता तत्र आगतः । पुरुषोत्तमशर्माणं दृष्ट्वा सः काष्ठबन्धम् अवतार्य विनयेन नमस्कृतवान् ।

तदा पुरुषोत्तमशर्मा अपि तं नमस्कुर्वन् पृष्टवान् - ''रत्न ! अपि कुशलम् ? सर्वं सम्यक् प्रचलति खलु ?'' इति ।

एतत् दृष्ट्वा आश्चर्यम् अनुभवन् रघुपतिः पुरुषोत्तमशर्माणं पृष्टवान् - ''किम् एतत् क्रियते श्रीमन् ! महापण्डितः भवान् तं काष्ठविक्रेतारं किमर्थं नमस्करोति ?'' इति ।

तद पुरुषोत्तमशर्मा हसन् उक्तवान् - ''शिष्टाचारादिषु आस्थावान् जनः रत्नः । तस्य मम च वृत्तौ भेदः स्यात्, किन्तु आवाम् उभौ अपि मानवौ एव । यः नमस्करोति तस्मै नमस्कारसमर्पणं शिष्टाचारः । यदि अहं तथा न करोमि तर्हि अहं शिष्टाचारज्ञः न भवेयम् । आदरं दर्शितवतः विषये आदरः दर्शनीयः इति शास्त्राणि अपि वदन्ति । शास्त्रानुगुणं व्यवहारः कृतः चेदेव अस्माकं गौरवं वर्धते'' इति ।



# वेताल-कथा

# स्वार्थी

दृढव्रती त्रिविक्रमः पुनरपि वृक्षस्य समीपं गत्वा वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य अधः आगतवान् । ततः यथापूर्वं मौनेन श्मशानाभिमुखं प्रस्थितवान् च । तदा शवान्तर्गतः वेतालः अवदत् - ''अये राजन् ! 'श्मशानमार्गे क्रूरजन्तवः सन्ति, मध्यरात्रसमये भूतप्रेतादयः सञ्चरन्ति, अन्धकारबहुले एतस्मिन् काले अपायः यदाकदाचित् अपि सम्भवेत्' इति अहं बहुधा भवन्तं स्मारितवान् । तथापि भवान् मम वचने श्रद्धावान् न जातः इति तु खेदस्य विषयः । अहं भवतः हितचिन्तकः । भवतः स्थितिः उत्तमा भवतु इत्येषा एव इच्छा मम । भवतः जागरणार्थं कवेः स्पन्दनदासस्य कथां श्रावयामि । श्रद्धया शृणोतु तावत्'' इति ।

अनन्तरं वेतालेन कथा आरब्धा -

स्पन्दनदासः दुर्गापुरस्य निवासी । सः युवकः । कवितारचने सः सिद्धहस्तः । यत्किञ्चित् वस्तु



अधिकृत्य क्षणाभ्यन्तरे काव्यं रचयति स्म सः । तस्य एतत् सामर्थ्यं दृष्ट्वा जनाः आश्चर्यचकिताः भवन्ति स्म । तस्य कवितां श्रद्धया शृण्वन्ति स्म अपि । आनन्दस्य प्रतिफलरूपेण तस्मै धनं यच्छन्ति स्म ते । अतः तस्य जीवनं सुखेन यापितं भवति स्म ।

ग्रामे सुन्दरं गृहम् आसीत् तस्य । समृद्धा कृषिभूमिः अपि आसीत् । प्रभूतं धनं सम्पादितवान् आसीत् सः । यदा जीवनं सुव्यवस्थितं जातं तदा विवाहे मतिं कृतवान् सः । सुन्दरी कन्या परिणीता अपि ।

अथ कदाचित् तस्मिन् ग्रामे क्षामः आगतः । वर्षद्वयतः अनावृष्टिः बाधते स्म तत्र । धनिकाः तु विना क्लेशं जीवन्ति स्म । किन्तु निर्धनानां दशा शोचनीया जाता आसीत् । उदरं कथं पूरणीयम् इति तेषां समस्या । केचन ग्रामत्यागविचारम् अपि चिन्तयन्तः आसन् ।

जगदीशः नाम युवकः अनेकान् ग्रामान् दृष्ट्वा आगत्य जनान् अवदत् - ''एतस्मिन् ग्रामे किम् अस्ति इदानीम् ? पत्रपुरनामकः ग्रामः समृद्धः, अस्माकं वासार्थं योग्यः च अस्ति । तत्र कोऽपि उद्योगः प्राप्येत । अतः वयं सर्वे एतं ग्रामं परित्यज्य तम् एव ग्रामं गच्छाम'' इति ।

ग्रामस्य ज्येष्ठाः ग्रामत्यागविचारं न अङ्गीकृतवन्तः । ते जगदीशम् उक्तवन्तः - ''भवतः वचनं युक्तम् एव स्यात् । किन्तु वयं तु एतं ग्रामं त्यक्तुं न इच्छामः । स्पन्दनदासस्य कवितानां श्रवणस्य भाग्यम् अन्यग्रामे कथं प्राप्येत ? यदि स्पन्दनदासः अस्माभिः सह आगच्छेत् तर्हि वयं ग्रामत्यागं चिन्तयेम'' इति ।

तदा जगदीशः स्पन्दनदासं दृष्ट्वा प्रवृत्तं सर्वं निवेद्य अवदत् - ''भवान् अपि अस्माभिः सह आगच्छतु । तेन ग्रामस्य ज्येष्ठाः अपि ग्रामत्यागम् अङ्गीकुर्युः'' इति ।

जगदीशस्य वचनं श्रुत्वा स्पन्दनदासः दिग्भ्रान्तः । सः झटिति ग्रामप्रमुखसमीपं गत्वा - ''ग्रामजनाः ग्रामत्यागं चिन्तयन्तः सन्ति । एतस्य निवारणार्थं भवान् किमपि करोतु'' इति प्रार्थितवान् ।

तदा ग्रामप्रमुखः असहायकतां प्रदर्शयन् उक्तवान् - ''वयं किं कर्तुं शक्नुयाम ? अहं महाराजम् अत्रत्यस्थितिं निवेदितवान् । किन्तु कोऽपि परिणामः न जातः । अतः गन्तुम् इच्छवः गच्छन्तु नाम । तान् प्रतिरोद्धुं वयम् असमर्थाः'' इति ।

प्रतिवचनं किमपि वक्तुम् असमर्थः स्पन्दनदासः जगदीशसमीपं प्रत्यागत्य - ''भवन्तः आहत्य द्विशतं जनाः सन्ति खलु ? भवतां भोजनादिनिमित्तम् अहं प्रतिदिनम् एकैकस्मै यावत् आवश्यकं तावत् धनं ददामि । एतं व्ययभारम् अहं स्वयं निर्वक्ष्यामि । केनापि ग्रामः न परित्यक्तव्यः'' इति ।

एतत् श्रुत्वा आश्चर्यम् अनुभवन् जगदीशः अवदत् - ''भवतः दानबुद्धिः निश्चयेन प्रशंसार्हा । किन्तु भवान् कति दिनानि एवं दातुं शक्नुयात् ? कोऽपि अन्यः परिहारोपायः चिन्तनीयः एव खलु ?'' इति ।

तदा स्पन्दनदासः अवदत् - ''तद्विषये अपि चिन्तितं मया । दिनद्वयम् अहं ग्रामे सर्वत्र अटिष्यामि । जनानां कष्टानि स्वयं द्रक्ष्यामि । ततः तानि अधिकृत्य कविताः लेखिष्यामि । ताः कविताः महाराजं श्रावयिष्यामि । तासां श्रवणात् महाराजस्य हृदये अवश्यं करुणा उत्पद्येत । यदि मया साफल्यं न प्राप्यते तर्हि अहं कवितालेखनप्रवृत्तिम् एव परित्यक्ष्यामि । एतं ग्रामम् अपि पुनः न प्रवेक्ष्यामि'' इति ।

स्ववचनस्य अनुसारं सः ग्रामे दिनद्वयम् अटितवान् । प्रजानां कष्टस्य दर्शनात् तस्मिन् कवितारचनास्फूर्तिः उद्गता । सः भावपूर्णाः कविताः रचितवान् । तासु प्रजानां दुर्दशा मर्मस्पर्शितया चित्रिता आसीत् । कठोर-हृदयस्यापि अन्तरङ्गस्य विद्रावणे समर्थाः आसन् ताः । ताः स्वीकृत्य सः राजधानीं प्रति प्रस्थितवान् । मार्गे अपि तेन दारुण-स्थितयः दृष्टाः । ताः अधिकृत्यापि सः कविताः रचितवान् । राजधानीं प्राप्य



राजास्थानं प्रवेष्टुम् उद्युक्तः सः द्वारपालेन अवरुद्धः ।

तदा स्पन्दनदासः - ''अहं विष्णुभक्तः अस्मि । राजा विष्णुस्वरूपी । जयविजयौ इव किमर्थं मां राजदर्शनात् निवारयति भवान् ? यदि अहं क्रुद्धः स्यां तर्हि शापेन भवन्तं राक्षसं कुर्याम् । जागरूको भवतु'' इत्येतं भावं पद्यरूपेण उक्तवान् ।

रक्षकभटाः तस्य श्रेष्ठतां ज्ञात्वा झटिति अन्तः गत्वा राजानं प्रवृत्तं सर्वम् उक्तवन्तः । राजा तान् आज्ञापितवान् - 'अविलम्बेन तम् अन्तः प्रवेशयन्तु' इति । स्पन्दनदासः राजसभां प्रविष्टवान् ।

सः राजानं नमस्कृत्य दुर्गापुरग्रामवासिनां दुर्गतिः परिचायिकाः कविताः श्रावितवान् । तासां श्रवणतः राज्ञः, आस्थानिकानां च हृदयं



करुणया पूर्णं जातम् ।

राजा झटिति मन्त्रिणम् आहूय आज्ञापितवान् - ''दुर्गापुरं प्रति अपेक्षितं साहाय्यं प्रापयतु'' इति । ततः सः स्पन्दनदासं दृष्ट्वा अवदत् - ''कविवर्य ! भवतः कविताः मां योग्यक्रमेण अजागरयन् । दुर्गापुरं यथा तथैव अन्ये ग्रामाः अपि दुरवस्थाग्रस्ताः स्युः । तेषां कृते अपि योग्यं साहाय्यादिकम् अद्यैव प्रेषयिष्यामि'' इति ।

एतस्य श्रवणात् स्पन्दनदासः सन्तृप्तः । ततः सः प्राकृतिकदृश्यानि अधिकृत्य रचितानि कानिचित् पद्यानि श्रावितवान् । तस्मात् राज्ञः आस्थानिकानां च मनः प्रसन्नं जातम् । सर्वे हर्षध्वनिम् उत्पादितवन्तः ।

राजा उक्तवान् - ''भवान् आस्थानकविपदम् अलङ्करोतु'' इति । स्पन्दनदासः अवदत् - ''मद्ग्रामवासिनां सम्मतिः अस्ति चेदेव एतत् सम्भवेत्'' इति ।

जगदीशः श्रुतवान् यत् राजा स्पन्दनदासस्य विज्ञप्तिम् अङ्गीकृतवान् अस्ति, तस्य सत्कारम् अपि कृतवान् अस्ति इति । अतः सः झटिति एव राजधानीं प्रति गतवान् । राजानं दृष्ट्वा सः अवदत् - ''प्रभो ! स्पन्दनदासस्य कविताः अस्मद्ग्रामवासिनां प्राणेभ्योऽपि प्रियाः सन्ति । कविताश्रवणभाग्यार्थं ते बुभुक्षया अपि स्थातुं सिद्धाः । अस्मत्तः एतादृशस्य महात्मनः दूरीकरणं न युक्तम् । स्पन्दनदासम् एव अस्मद्ग्रामस्य प्रमुखं करोतु । सः अस्माकं योगक्षेमादिकं निर्वक्ष्यति'' इति ।

किन्तु स्पन्दनदासः जगदीशस्य वचनं

खण्डयन् - ''मम अनुपस्थितौ अपि दुर्गा-पुरीयाः सुखेन स्थातुम् अर्हन्ति एव । मम जीवनम् अशाश्वतम् । मम अवलम्बनेन किम् ? तेषां तु आवश्यकता अन्नवस्त्र-निद्रादीनाम् । तन्निमित्तं ते प्रयत्नं कुर्वन्तु । अहं राजास्थाने एव स्थास्यामि । कदाचित् दुर्गापुरं प्रति गच्छन् कविताः श्रावयिष्यामि'' इति उक्त्वा जगदीशं प्रेषितवान् ।

वेतालः एवं कथां समाप्य अवदत् - ''राजन् ! दुर्गापुरवासिनः क्षामकाले अपि बुभुक्षया मरणं प्राप्तुम् सिद्धाः, किन्तु स्पन्दन-दासस्य सहवासं त्यक्तुं न सिद्धाः । स्पन्दनदासः राज्ञः पुरतः स्वग्रामस्य दुस्स्थितिं हृदयस्पर्शितया वर्णितवान्, ग्रामस्य रक्षणम् अपि कृतवान् । एतादृशः स्पन्दनदासः राजास्थाने एव स्थातव्यम् इति किमर्थं निर्णीतवान् ? मम तु भासते यत् सः स्वार्थी इति । सुखभोगेच्छया सः तथा कृतवान् इति किं न भासते ? यदा आस्थानकवित्वसम्भावना उपस्थिता तदा सः दुर्गापुरप्रीतिं परित्यक्तवान्, तूणीकृतवान् वा । एवं ननु ? किं तस्य व्यवहारः समर्थनयोग्यः ? मम एतेषां सन्देहानां समाधानं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति ।

तदा मौनेन स्थातुम् अशक्तः त्रिविक्रमः अवदत् - ''स्पन्दनदासस्य कविताः दुर्गा-पुरीयाः शृण्वन्ति स्म । आनन्दं च प्राप्नुवन्ति स्म । किन्तु ताः एव कविताः राजा यदा श्रुतवान् तदा अपूर्वं फलं प्राप्तम् । दुर्गा-पुरीयाणां, दुरवस्थापन्नानां सर्वेषां ग्रामाणां जनानां च हितं ततः सिद्धम् । एतत् स्पन्दनदासः लक्षितवान् । ततः सः निर्णीतवान् यत् दुर्गापुरीयाणाम् आनन्दमात्राय मम कविताः न भवेयुः, प्रत्युत राज्यस्य सर्वे नागरिकाः अपि ततः लाभं प्राप्नुयुः इति । आस्थाने स्थितः सः राजानं कविताद्वारा जागरयितुं शक्नोति । अतः सः राजास्थाने स्थातव्यम् इति निर्णीतवान् । तस्य निर्णयः स्वार्थप्रेरितः सर्वथा न, प्रत्युत लोकहितोद्देशकः सः । स्वसुखार्थं सः एवं निर्णीतवान् इति चिन्तनं सर्वथा अयुक्तम्'' इति ।

राज्ञः कथनं यदा समाप्तं तदा वेतालः ततः अदृश्यः भूत्वा शवसहिततया निर्गत्य यथापूर्वं वृक्षस्य शाखम् अवलम्बितवान् ।



# भारतम् अवगम्यताम्

## प्रश्नोत्तरम्

भारतीया परम्परा इतिहासपुराणादीनि अवलम्ब्य तिष्ठति । प्रायः भारतीयाः बालाः सर्वे रामायणं, महाभारतम्, अन्यपुराणकथाः च श्रुतवन्तः एव भवन्ति । एतस्य मासस्य प्रश्नाः एतां कथापरम्पराम् अवलम्ब्य सन्ति । अधोनिर्दिष्टप्रश्नानाम् उत्तराणि प्राप्तुं प्रयत्नं कुर्वन्तः भवन्तः स्वस्य परम्पराज्ञानस्य परीक्षां कुर्वन्तु ।

१. कश्चन जनसमूहः निद्राहारं, विश्रान्तिं च विना घोरतपस्याम् अकरोत् । तस्य गणस्य नाम किम् ?
२. हिमालयस्य पुत्री का ? पर्वतसम्बद्धं तस्याः नामद्वयं निर्दिशन्तु ।
३. पत्युः शापस्य कारणतः काचित् शिलात्वं प्राप्तवती । कस्यचित् महात्मनः पादस्पर्शात् सा पुनः सजीवा अभवत् । सा का ? शापदाता ऋषिः कः ? सः महात्मा च कः ?
४. क्षीरसागरमथनसमये बहूनि अमूल्यवस्तूनि प्राप्तानि । एवं प्राप्तेषु अन्यतमः आसीत् कश्चन गजेन्द्रः । सः देवलोकाधिपतेः इन्द्रस्य वाहनं जातः । तस्य गजेन्द्रस्य नाम किम ?
५. कृष्णस्य मातुलस्य मथुराधीशस्य कंसस्य पितुः नाम किम् ?
६. नागाः मनुष्यमुखाः सर्पदेहाः च भवन्ति । एतादृशः कश्चन नागः मुखज्वालया चक्रवर्तिनं नलम् अदहत् । तस्य नाम किम् ?
७. पत्युः अन्धतां दृष्ट्वा काचित् साध्वी स्वनेत्रे अपि वस्त्रपट्टिकया बद्धवती । यत् पत्या न प्राप्यते तत् सुखं ममापि मास्तु इति तस्याः निर्णयः आसीत् । सा साध्वी का ? तस्याः पत्युः नाम किम् ?
८. सीतापहारसमये रामलक्ष्मणसीताः कस्मिन् अरण्ये वसन्ति स्म ?

*(उत्तराणि अग्रिमे मासे)*

### *'फेब्रवरी'मासस्य उत्तराणि*

१. अरुणाचलप्रदेशः ।
२. मध्यप्रदेशराज्ये ।
३. 'मणिपुरम्' इति ।
४. बिहारराज्ये । 'विहार'शब्दस्य अपभ्रंशः एव बिहार् इति ।
५. हिमाचलप्रदेशस्य शिमलानगरे ।
६. केरलराज्ये ।
७. चन्दिगढ इति । राज्ययोः नाम पञ्जाब्, हरियाणा चेति ।
८. उत्तरप्रदेशे । हरिद्वारे प्रयागे च ।

# भारत-गौरव-गाथा

महासंस्कृत्याः स्थूलदर्शनम्, प्रतियुगं सत्यान्वेषणार्थं कृताः विशेषयत्नाः

## २६. सम्भाव्यसमस्यायाः परिहारः वेतालकथायाम्



सन्दीपस्य, चमेल्याः, तन्मित्राणां च मनसि राज्ञः विक्रमादित्यस्य कथा एव आवर्तते स्म । भानुवासरः यदा उपस्थितः तदा ते देवनाथवर्यस्य समीपम् आगताः । ''अहो, विक्रमादित्यस्य धैर्यशीलता !'' इति अवदत् चमेली ।

''स्यात् एव तथा । यस्य आस्थाने कालिदासम् अपि अविहाय नव कविरत्नानि आसन्, सः सामान्यः कथं भवितुम् अर्हति'' इति उक्तवती डाली ।

एतत् श्रुत्वा देवनाथवर्यः हसन् अवदत् - ''मया पूर्वम् उक्तं कथं विस्मृतं भवद्भिः ? इतिहासकाराः न सहमतिं सूचयन्ति यत् - एते नव जनाः अपि समानकाले आसन् इति । किन्तु विक्रमादित्यविषये जनानाम् अभिमानः एतावत् आसीत् यत् ते विभिन्नकालिकान् अपि श्रेष्ठान् एतस्य आस्थाने स्थितान् वर्णितवन्तः । तदस्तु, सः विक्रमादित्यः कतमः ?''

''तात ! सः प्रथमः एव स्यात् खलु ?'' इति स्वाभिप्रायं प्रकटितवान् सन्दीपः ।

''आम् । यथा पूर्वं मया उक्तं तथा सः विक्रमादित्यः श्रेष्ठः स्यात् एव । तस्य जनप्रियता अपि असाधारणी । यस्य नाम्ना नूतनस्य शकस्य आरम्भः अभवत् सः सामान्यः

अनुवर्तमाना कथामाला



कश्चन राजा न स्यात् एव । विक्रमशकवर्षीय-गणनायाः अनुसर्तारः अस्माकं देशे सन्ति अद्यापि बहवः'' देवनाथवर्यः अवदत् ।

''तात ! विक्रमवेतालकथा कथम् उत्पन्ना ?'' - अपृच्छत् डाली ।

''अहं न जानामि । कोऽपि इतिहासज्ञः जानीयात् कदाचित् । अहं तस्य कारणम् एवं चिन्तयामि - राजा विक्रमादित्यः तीक्ष्णमतिः, चतुरः च आसीत् । सः अनेकाः समस्याः स्वबुद्धिकौशलेन लीलया परिहृतवान् स्यात् । तत् दृष्ट्वा तत्काले जनाः नितरां प्रभाविताः जाताः स्युः । तदा ते चिन्तितवन्तः स्युः - 'अस्माकं राजा न केवलं मानवानां समस्याम्, अपि तु अन्यविधाः, तन्नाम पिशाचादिभिः दत्ताः समस्याः अपि, परिहर्तुं समर्थः इति । अतः एव वेतालकथाः व्यवहारपथम् आगताः स्युः । तासु कथासु त्रिविक्रमः महाधैर्यशाली । वेतालस्य प्रश्नाः युक्तियुक्ताः भासन्ते । किन्तु त्रिविक्रमस्य उत्तराणि तेषां प्रश्नानाम् आभासतां प्रदर्श्य समुचितमार्गानुसारीणि भवन्ति । एतत् तस्य तीक्ष्णमतित्वं दर्शयति'' इति अवदत् देवनाथवर्यः ।

''उदाहरणम् ?'' - डाली अपृच्छत् ।

''किं भवती विक्रमवेतालसम्बद्धाः प्रसिद्धाः पञ्चविंशतिकथाः न श्रुतवती ?'' इति पृष्टवान् देवनाथवर्यः ।

सन्दीपचमेल्योः ऋते तत्र उपस्थितेषु कोऽपि वेतालपञ्चविंशतिकां न जानाति स्म । अतः ते देवनाथवर्यं सानुरोधम् उक्तवन्तः यत् तासु काञ्चन श्रावयतु इति ।

''अस्तु नाम, या कथा एतस्मिन् कालेऽपि सङ्गता भवेत् तादृशीं काञ्चित् कथाम् अहं श्रावयामि'' इति उक्त्वा देवनाथवर्यः कथाम् आरब्धवान् -

''पूर्वं धवलो नाम कश्चन तरुणः निवसति स्म । यदा सः बालः आसीत् तदा एव कस्यचित् संन्यासिनः प्रभावः तदुपरि जातः । अतः 'संन्यासिना भवितव्यं मया' इति सङ्कल्पः तस्य मनसि उदितः । एतस्मात् दुःखमयप्रपञ्चात् दूरं गत्वा शाश्वतपदप्राप्तये प्रयत्नः करणीयः इति सः सङ्कल्पितवान् ।

किन्तु प्राप्तवयस्कस्य तस्य विवाहः करणीयः इति मातापित्रोः इच्छा । अतः तौ तस्य विवाहं निर्वर्तितवन्तौ एव । तस्य पत्नी बुद्धिमती सुन्दरी च । अतः तस्य वैवाहिकजीवनं सुखमयम् आसीत् । एकदा तस्य श्यालः गृहम् आगत्य उत्सवनिमित्तं भगिनीम् आवुत्तं च निमन्त्रितवान् । ततः ते त्रयः अपि गृहात् प्रस्थिताः । अरण्य-मार्गेण गच्छन्तः आसन् ते । घण्टानन्तरं श्रान्ताः

ते विश्रान्तिनिमित्तम् एकस्य वृक्षस्य अधः उपविष्टवन्तः ।

तदा धवलेन एकः जीर्णदेवालयः दृष्टः । सः कुतूहलेन अन्तः गतवान् । देव्याः आलयः सः । अन्तः शान्तगम्भीरवातावरणम् आसीत् । तत्परिसरबलात् सः स्वकीयं पूर्वतनसङ्कल्पं स्मृतवान् । 'सामान्यः जनः इव कौटुम्बिकजीवनं यापयन् अस्मि खलु ! देवसाक्षात्कारार्थं कोऽपि यत्नः एव न कृतः । धिक् माम्' इति स्वगतं वदन् सः देव्याः हस्ततः खड्गम् आकृष्य स्वस्य शिरः स्वयं कर्तितवान् ।

किञ्चित्कालानन्तरम् आवुत्तम् अन्विष्य आगतः श्यालः आलयं प्रविष्टवान् । तत्र आवुत्तः मृतः दृश्यते ! 'एतां वार्तां मम भगिनीं कथम् अहं वदेयम् ? तस्यै कथम् अहं मुखं दर्शयेयम् ?' इति चिन्तयन् सोऽपि खड्गेन स्वस्य शिरसः छेदनं कृतवान् ।

दीर्घकालः अतीतः चेदपि आलयं प्रविष्टवन्तौ पतिः अग्रजः च न आगतौ इत्यतः चिन्ताक्रान्ता सा महिला अपि आलयं प्रविष्टवती । मृतौ तौ दृष्ट्वा सा दिग्भ्रान्ता । पतिहीना अग्रजहीना च अहं कथं जीवेयम् इति विचिन्त्य सा स्वस्यापि शिरः छेत्तुं खड्गम् उन्नीतवती ।

तावता देव्याः मुखतः ध्वनिः श्रुतः । ''वत्से, अलं साहसेन । आध्यात्मिकजीवनं मया न यापितम् इति चिन्तयन् भवत्याः पतिः आत्महत्यां कुर्वन् स्वस्य मूर्खतां दर्शितवान् । तम् एव अनुसरन् भवत्याः सहोदरः अपि मूर्खताम् आचरितवान् । किं भवती अपि



मूर्खा भवितुम् इच्छति ?'' इति पृष्टवती देवी ।

''जगदम्ब ! पत्या सहोदरेण च विना कथम् अहं जीवेयम् ? कम् आश्रयेयम् ? कुत्र गच्छेयम् ?'' इति विलपन्ती पृष्टवती धवलस्य पत्नी ।

''तयोः रुण्डं मुण्डं च योजयतु । ततः मम पुरतः स्थितेन तीर्थजलेन तौ सिञ्चतु । तदा उज्जीवितौ भवतः'' इति उक्तवती देवी ।

धवलस्य पत्नी देव्याः आदेशस्य अनुसरणं कृतवती । तदा तस्याः पतिः सहोदरः च उज्जीवितौ ।

''कथम् आवाम् एतस्मिन् निर्जनप्रदेशे निद्रावशं गतौ आस्व'' इति पृष्टवन्तौ तौ । धवलस्य पत्नी किमपि न उक्तवती । ततः तौ उत्थाय सञ्चारम् आरब्धवन्तौ ।

तौ यदा किञ्चिदग्रे गतौ तदा धवलस्य

पत्नी आत्मना कृतम् महाप्रमादं ज्ञातवती । तया पत्युः रुण्डे सहोदरस्य मुण्डं, सहोदरस्य रुण्डे पत्युः मुण्डं च योजितम् आसीत् ।

एवं कथां समाप्य वेतालः त्रिविक्रमम् अपृच्छत् – ''अये राजन् ! सा कं स्वपतित्वेन स्वीकुर्यात् ? तस्याः पतिः कः ? पतिशिरोयुक्तः तस्याः पतिः, उत पतिशरीरयुक्तः भ्रातृशिरोयुक्तः ?'' इति ।

तदा राजा अवदत् – ''पतिशिरोयुक्तः एव पतित्वेन स्वीकरणीयः तया । यतः शिरः एव सर्वेषु अङ्गेषु प्रधानम् । मुण्डस्थानि अङ्गानि एव सर्वं कारयन्ति'' इति ।

एतावत् उक्त्वा यदा देवनाथवर्यः कथां समापितवान् तदा सर्वे श्रोतारः एकस्वरेण उक्तवन्तः – ''अहो, रमणीया अपूर्वा च कथा'' इति ।

''कथा तु अपूर्वा एव । मया कथारम्भात् पूर्वम् एव उक्तम् आसीत् खलु यत् एतस्याः कथायाः नीतिः आधुनिककाले अपि सङ्गच्छते इति । का सा नीतिः ?'' इति अपृच्छत् देवनाथवर्यः ।

सर्वे क्षणकालं मौनेन स्थितवन्तः । तत् मौनं भञ्जयन् उक्तवान् सन्दीपः – ''केभ्यश्चित् मासेभ्यः पूर्वं यः दिवं गतः तस्य डा॰ क्रिश्चियन् बर्नार्ड्वर्यस्य संशोधनस्य सम्बन्धः अत्र स्यात् खलु ?'' इति ।

''आम् । सम्यक् ऊहितं भवता । चतुर्भ्यः दशकेभ्यः पूर्वं डा॰ बर्नार्ड्वर्यः एकस्य हृदयम् अपरस्य शरीरे योजयितुं समर्थः जातः । तदा काचित् चर्चा प्रवर्तते स्म – किं मुण्डस्यापि योजनं शक्यते इति । तदपि यदि शक्यते तदा प्रश्नः उद्भवेत् यत् मुण्डशरीरयोः योजनस्य अनन्तरं व्यक्तेः अभिज्ञानस्य प्रकारः कः इति । तदा निर्णयः कथं करणीयः इति विक्रम-वेतालकथा खलु मार्गं सूचयति ?'' इति अवदत् देवनाथवर्यः ।

''आम् । युक्तम् एतत्'' इति उक्तवन्तः सर्वे बालाः ।



## अकबरस्य रहस्यम्

अकबरस्य चर्म सदा कान्त्या शोभते स्म । तस्य रहस्यं किं भवन्तः जानन्ति ? 'अकबरनामा'नामकः ग्रन्थः वदति - 'अक्बरः महाराष्ट्रे औरङ्गाबादसमीपे लोनार-प्रदेशे स्थितस्य सरोवरस्य



जलेन निर्मितं फेनकम् उपयुङ्क्ते स्म । तस्य सरोवरस्य जलम् औषधगुणोपेतं सत् चर्मरोग-निवारणसमर्थम् आसीत् । सहस्राधिकवर्षेभ्यः पूर्वं धूमकेतोः पतनात् महान् गर्तः निर्मितः आसीत् । ततः तत्र लोनार्सरोवरं निर्मितम् अभवत् । तस्मिन् जले 'अल्कलिन्' अस्ति । अतः तस्मिन् सरोवरे कोऽपि जीवी जीवितुं न अर्हति ।

## नायकाराधनम्

नायकाराधनस्य प्रकाराः अनन्ताः । महाराष्ट्रे एतत्-सम्बद्धम् अपूर्वम् उदाहरणं प्राप्यते ।

कोङ्कणतीरे सिन्धुदुर्गे छत्रपतिशिवाजीमहाराजस्य निमित्तम् एव एकं मन्दिरम् अस्ति । शिवाजीमूर्तिः शिलामयी । बृहत् धातुमयं मुखावरणम् अस्ति तस्याः मूर्तेः । मूर्तेः हस्ते उभय-धारामयः कश्चन तीक्ष्णः खड्गः अस्ति । स च खड्गः शिवाजिना उपयुज्यते स्म इति श्रूयते । ये पूर्वं शिवाजिसेवां कृतवन्तः आसन् तेषां वंशीयाः एव सन्ति अद्यापि सिन्धुदुर्गे ।



# महिलानां निषेधः

शीतलवायुमये नील-गिरिपर्वतप्रदेशे 'टोडास्'-कुलीयाः गिरिजनाः वसन्ति इति बहवः जानीयुः । ते 'मुण्ड'नामके वसतिप्रदेशे निवसन्ति । ते आधिक्येन सञ्चारशीलाः । ते कुलीयसमुदाचारान् विनालोपं



पालयन्ति । तेषु अन्यतमः एवम् अस्ति - तज्जातीयाः महिलाः तेषाम् आराध्य-देवस्य मन्दिरं प्रवेष्टुं न अर्हन्ति । मन्दिरात् अनतिदूरे अवधिज्ञापकं दण्डादिकं स्थाप्यते । तत् अतिक्रम्य आगन्तुं नार्हन्ति महिलाः । किन्तु यत्र महिलानां प्रवेशः एव निषिद्धः तस्य मन्दिरस्य आराध्यदेवता अस्ति काचित् देवी एव !!

# वर्णैः स्नापनम्

यदि भवन्तः राजपदे स्थिताः स्युः तर्हि होलिकापर्व कथम् आचरेयुः ? किं भवन्तः प्रासादस्य भित्तिं विविधैः वर्णैः शबलितां कर्तुम् अनुमन्येरन् ? दुर्गभित्तेः उपरि स्थित्वा बान्धवान् मित्राणि च वर्णमयजलेन स्नापयितुं किम् उत्सहेरन् ?

किं प्रश्नैः ? जयपुरस्य राजानः राज्ञ्यः च पारम्परिक-तया होलिकोत्सवं कथम् आचरन्ति स्म इत्येतत् परिशीलयाम तावत् ।

इतिहासः ज्ञापयति - 'राजा गजम् आरुह्य हवामहल्-नामकस्य भवनस्य अन्य-भवनानां च पुरतः तिष्ठति



स्म । तेन सह तस्य सेवकाः वर्णमयजलेन, वर्णमयेन चूर्णेन वा पूर्णान् कन्दुकान् वहन्तः तम् अनुसरन्तः आगच्छन्ति स्म । राजा अन्तःपुरस्य वातायनेषु दृष्टिगोचरीभवन्तीः राज्ञीः तैः प्रहरति स्म । एषः विनोदप्रहारः तासां राज्ञीनाम् आनन्दाय भवति स्म ।

प्रतिक्रियारूपेण ताः राज्ञ्यः अपि लघ्व्या जनभुषुण्डिकया राजानं प्रहरन्त्यः वर्णजलेन स्नापयन्ति स्म ।

# विलक्षणा क्रीडा

एकं नारिकेलफलं ग्रहीतुं चतुर्दश जनाः यदि अहमहमिकया प्रवर्तेरन् तर्हि किं तत् दृष्ट्वा भवन्तः आश्चर्यान्विताः न भवेयुः ? किमर्थं तावन्तः जनाः नारिकेलम् अनुसरेयुः इति ? 'यूबी लखपी' क्रीडायां मग्नाः ते तथा कुर्वन्ति । मणिपुरराज्यस्य तरुणाः एतां क्रीडां क्रीडन्ति । एषा पादकन्दुकसदृशी एव क्रीडा, किन्तु अत्र कन्दुकस्थानस्थं नारिकेलं पादेन न प्रहरणीयम् ।

समचतुरस्राकारके क्रीडाङ्गणे एषा क्रीड्यते । एकस्मिन् कोणे पेटिकाकारः रच्यते । तैललिप्तं नारिकेलम् एतस्यां पेटिकायां पातनीयम् दूरात् । क्रीडानिरताः एतस्य नारिकेलस्य प्राप्त्यर्थं प्रयतन्ते । यः पेटिकायां पातयति तस्य जयः । क्रीडावसरे भागग्राहिषु कस्यचित् शरीरतापः आवेशवशात् अत्यधिकः भवति तदा शीतलं जलं पातयित्वा वादनिरतौ पृथक्क्रियेते ।



किं भवत्सु अपि यूबी-लखपीक्रीडायां भागवहनाय उत्साहः उत्पन्नः इदानीम् ?



# बुद्धिमान् गोपालबन्धुः



गोपालबन्धोः पितुः प्रथमं वार्षिकश्राद्धम् आसीत् तत् । अतः तेन सुदूरम् अतिक्रम्य नौकया च नदीं तीर्त्वा पुरोहितस्य गृहं प्राप्तव्यम् आसीत् । ''नौकां वेगेन चालयतु । मया मुहूर्तस्य अतिक्रमणात् पूर्वम् एव श्राद्धं करणीयम् अस्ति'' इति वदन् सः नौका-चालकं प्रेरितवान् ।

पुरोहितः मन्त्रान् उक्तवान् । गोपालः प्रेतात्मनः सद्गत्यर्थं विविधाः क्रियाः कृतवान् । एतदवसरे एव पुरोहितः मन्त्रकथनं स्थगयित्वा उक्तवान् - ''भवतः पिता मत्तः शतं रूप्यकाणि स्वीकृतवान् आसीत् । तत् इदानीं प्रत्यर्पयतु । अन्यथा श्राद्धक्रिया समाप्तिं न एष्यति'' इति ।





मुहूर्तसमाप्तितः पूर्वम् एव श्राद्धं तु समापनीयम् आसीत् एव । अतः गोपालबन्धुः उक्तवान् - ''श्रीमन् ! धनं श्वः भवतः गृहम् एव प्रापयिष्यामि । श्वः प्रातः भवतः गृहस्य द्वारस्य पुरतः भविष्यति तत् । कृपया इदानीं श्राद्धकार्यं समापयतु'' इति ।

स च फनसफलस्य कालः । श्राद्धस्य अनन्तरं सः गृहस्य पृष्ठतः स्थितानि पनस-बीजानि सङ्गृह्य एकस्मिन् स्यूते स्थापितवान् । 'मया द्वारस्य समीपे एव स्थाप्यते इति उक्तम् । तथैव अवश्यं करिष्यते मया' इति स्वगतम् अवदत् सः ।





अनन्तरदिने उषसि एव पुरोहितस्य गृहं प्राप्य अङ्गणे सः बीजानाम् आरोपणम् आरब्धवान् । पङ्क्तिशः तेन बीजानि भूमौ आरोपितानि । पुरोहितस्य बहिरागमनम् एव प्रतीक्षमाणः स्थितवान् सः ।



द्वारम् उद्घाट्य बहिः आगतः पुरोहितः बीजारोपणार्थं कृतान् गर्तान् मृत्तिकया पूरयन्तं गोपालं पृष्टवान् - ''किम् एतत् क्रियते गोपाल ?'' इति ।



''परलोकं गतेन मम पित्रा कृतम् ऋणम् अवश्यं प्रत्यर्पयिष्यते मया इति प्रतिज्ञातं खलु आसीत् ? अतः मया पनसबीजानि आरोपितानि । तानि यदा वृक्षाः भविष्यन्ति तदा....''

तस्य वचनं मध्ये स्थगयन् अवदत् पुरोहितः - ''पनसबीजानि धनत्वेन न परिगण्यन्ते खलु ?'' इति । तदा गोपालः उक्तवान् - ''यदा एतानि वृक्षत्वं प्राप्स्यन्ति तदा एतेषां फलानि विक्रीय धनं प्राप्तुं शक्यते एव । मया उक्तम् आसीत् खलु - द्वारसमीपे स्थाप्यते इति, तदेव कृतं मया'' इति ।



भारतीयाः उत्सवाः

# होलिका

होलिकोत्सवः वर्णमयं पर्व । शिशिरऋतोः समाप्तिं वसन्तस्य आगमनसङ्केतं च सूचयति एतत् । फाल्गुनमासस्य पूर्णिमायां होलिकोत्सवः आचर्यते । आधुनिकपाश्चात्त्य-गणनानुसारं मार्च्मासे भविष्यति एषः उत्सवः ।

शिशिरऋतौ धान्यसङ्ग्रहः समाप्तः भवति । वृक्षादयः च पल्लवैः विभूषिताः भवन्ति । अतः अयम् आमोदप्रमोदादीनां कालः । होलिकापर्व दिनत्रयं यावत् प्रचलिष्यति । वर्णमयोत्सवत्वेन आचर्यते एषः उत्सवः समग्रे देशे । वृद्धाः तरुणाः चापि वर्णमयजलं वर्णमयचूर्णं वा परस्परयोः उपरि पातयन्तः आनन्दम् अनुभवन्ति ।



वर्णमयजलपातनार्थं 'पिचकारी'नामकं पारम्परिकसाधनम् अपि उपयुज्यते । क्वचित् वर्णजलपूर्णानि वर्णचूर्णपूर्णानि वा 'गुब्बारे'-नामकानि वायुगोलकानि उपयुज्यन्ते । गानं, नृत्यं, मधुरखाद्यवितरणम् इत्यादयः अपि उत्सवस्य अङ्गानि भवन्ति । 'गुजिया'प्रभृतीनि पेयानि एतस्मिन् अवसरे सज्जीकृत्य पिबन्ति क्वचित् । क्वचिच्च 'भाङ्ग'नामकम् अल्पमद-जनकं पेयम् अपि पिबन्ति केचन ।

समग्रे उत्तरभारते होलिकोत्सवः महता वैभवेन एव आचर्यते । तस्मिन् दिने जनाः एकत्रीभूय शुष्कतृणानि, शुष्कवृक्षशाखादिकं च मेलयित्वा महान्तम् अग्निं प्रवर्तयन्ति ।

अन्यपर्वसु इव एतस्मिन् अपि पर्वणि सच्छक्त्या दुष्टशक्तिः जिता यत् तस्य सङ्केतः एव प्राधान्यम् आवहति । एतदङ्गतया विविधाः कथाः श्रूयन्ते लोके । तासु कथासु अन्यतमा एवम् -

मातुलः कंसः कृष्णस्य संहारार्थं पूतना-नामिकां राक्षसीं प्रेषयति । पूतना सुन्दरनारीवेषं धृत्वा कृष्णस्य गृहं प्रविशति । शिशुरूपाय कृष्णाय स्तन्यं पाययति । कृष्णः तु तस्याः स्तन्यं पिबन् प्राणान् अपि अपहरति ।

होलिकादिनस्य रात्रौ पूतनायाः मूर्तिः अग्नौ



दह्यते । विशेषतः कृष्णस्य जन्मभूमौ मथुरायाम् एषा पूतनामूर्तिदाहप्रथा अनुष्ठियते । कृष्णः होलिकोत्सवदिने गोपिकाभिः धेनुभिः च सह विहरति स्म इति कथा श्रूयते । अतः होलिका कृष्णस्य रासलीलया सम्बद्धा अस्ति ।

होलिकादिने मथुरायां मृद्घटाः भज्यन्ते । कृष्णः यदा बालः आसीत् तदा नवनीतम् अन्विष्यन् मित्राणां स्कन्धम् आरुह्य शिक्यासु स्थापितेषु घटेषु विद्यमानं नवनीतं दधि च चोरयति स्म इत्येषा कथा सर्वैः ज्ञायते एव । तदवसरे कचित् घटाः पात्यन्ते स्म । तां घटनां सङ्केतयितुं घटानां भञ्जनं क्रियते ।

होलिकोत्सवः होलिकायाः कथाम् अपि स्मारयति । होलिका हिरण्यकशिपोः भगिनी । हिरण्यकशिपोः पुत्रः प्रह्लादः महान् विष्णुभक्तः । किन्तु हिरण्यकशिपुः पुत्रस्य एतं व्यवहारं न सहते स्म । पुत्रस्य मारणार्थं तेन अनेके उपायाः आश्रिताः । तथापि यशस्विता तु न प्राप्ता । होलिकायाः विशिष्टा शक्तिः आसीत् । सा अग्निना दग्धा न भवति स्म । एकस्मिन् दिने सा प्रह्लादम् अङ्के उपवेश्य अग्निं प्रविष्टवती । तदा अग्निः होलिकाम् एव अदहत्, प्रह्लादं च न अस्पृशत् । एवं सच्छक्तिः दुष्टशक्तिं जितवती । एषः उत्सवः तं जयम् अपि सङ्केतयति ।

## होलिकावसरे काश्चन सूचनाः

१. यदा वर्णैः क्रीड्यते तदा प्राचीनवस्त्रस्य धारणं लाभाय ।
२. वर्णचूर्णाः नेत्रयोः अन्तः यथा न गच्छेयुः तथा जागरूकता भवतु ।
३. यदि कदाचित् चूर्णः नेत्रयोः अन्तः प्रविशेत् तर्हि झटिति नेत्रे क्षालयन्तु स्वच्छजलेन ।
४. होलिकाक्रीडानन्तरं स्नानेन स्वच्छाः भवन्तु ।
५. योग्यात् आपणात् उत्तमस्तरीयान् वर्णान् एव क्रीणन्तु ।
६. वर्णमयजलेन युक्तेन वायुगोलेन क्रीडा न क्षेमकरी ।

# जमशेड् नवरोज्

पारसीकाः 'फारसी' दिनदर्शिकाम् अनुसरन्ति । महाविषुपर्वतः तेषां नूतनवर्षस्य आरम्भः । अतः ते मार्च्मासस्य २१ तमे दिनाङ्के तम् उत्सवम् आचरन्ति । स च कालः वसन्तस्य आरम्भं ज्ञापयति । 'नवरोज' पदस्य अर्थः 'नूतनदिनम्' इति ।

पर्शियाराजः जमशेड्वर्यः कालगणनाक्रमं व्यवस्थापितवान्, पर्शियन्पञ्चाङ्गे तस्य क्रमस्य संयोजनं कारितवान् च । यदा सूर्यः मेषराशिं प्रविशति तदा वर्षारम्भः जातः इति परिगणयन्ति पारसीकाः । तत् प्रवेशदिनं 'नवरोज्' इति 'जम्शेड् नवरोज्' इति वा निर्दिश्यते । नववर्षारम्भदिने राज्ञः तुलाभारं कृत्वा राज्ञः यावान् भारः तावता भारेण युक्तानि सुवर्णादीनि दरिद्रेभ्यः दीयन्ते स्म ।



एतस्मिन् उत्सवदिने पारसीकाः नूतनवस्त्राणि धरन्ति, मन्दिरं गच्छन्ति, सार्वजनिकस्थले सभाम् आयोजयन्ति, बान्धवैः सह मिलन्ति, भूरिभोजनं कुर्वन्ति च । दानशीलता तु पारसीकानां मुख्यः गुणः । उत्सवदिनेषु स च गुणः यथाशक्ति विस्तार्यते तैः ।

# शुभशुक्रवासरः

क्रिस्तमतग्रन्थाः वदन्ति यत् ईस्टर्पर्वणः पूर्वदिने शुक्रवासरे येसुक्रिस्तः शूलम् आरोपितः आसीत् इति । अतः एतत् दिनं शुभदिनत्वेन आचर्यते । शूलारोपणघटनां ज्ञापयितुं तस्मिन् दिने प्रातः उत्सवः आचर्यते ।

तस्य शुक्रवासरस्य अपराह्णे येसुक्रिस्तः प्राणैः वियुक्तः जातः । अतः क्याथोलिक्मन्दिरेषु तस्मिन् दिने अपराह्णकाले वध्यचिह्नात् येसुक्रिस्तस्य मूर्तिः साङ्केतिकतया अवतार्यते ।



तस्मिन् दिने क्रिस्तमन्दिरेषु घण्टावादनं न भवति ।

केचन क्रिस्तालयाः कृष्णवस्त्रं धृत्वा शोकयात्रां कुर्वन्ति । क्रिस्तमूर्तिं भूमौ निखनन्ति च साङ्केतिकतया । शुभशुक्रवासरे सर्वे क्रैस्तजनाः उपवासम् आचरन्ति ।

# मोहरम्



मुस्लिमीयस्य प्रथममासस्य दशमं दिनम् एव मोहरम् नाम । प्रवादिनः मोहम्मदस्य पौत्रस्य हुतात्मतां निमित्तीकृत्य एतत् पर्व आचर्यते तैः । अतः दुःखस्य ज्ञापकं दिनम् एतत् ।

मोहम्मदः यदा दिवङ्गतः तदा खलीफपदार्थ योग्यस्य चयनं करणीयम् आसीत् । मोहम्मदः स्वस्य उत्तराधिकारित्वेन कमपि न सूचितवान् आसीत् । तस्य पुमपत्यम् अपि न आसीत् । तस्य अद्वितीया पुत्री फातिमा अलिं परिणीतवती आसीत् । तस्याः उभौ पुत्रौ आस्तां - हुसैनः हसनः चेति ।

प्रवादिनः मोहम्मदस्य मरणस्य अनन्तरं त्रयः 'खलीफाः जाताः । चतुर्थखलीफत्वेन अली चितः । बहवः एतस्य चयनस्य विरोधं कृतवन्तः । एतस्मिन् विवादे अली कथमपि मारितः अभवत् ।

ततः तस्य पुत्रः हसनः तदीयं पदम् अलङ्कृतवान् । द्वितीयः अलीपुत्रः हुसैनः तु केर्बेलायुद्धे भागं वहन् मोहरम्मासस्य दशमे दिने विलक्षणया रीत्या मरणं प्राप्य दैवसान्निध्यं प्राप्तवान् ।

मुस्लिंजनाः मोहरम्दिने शोभायात्रां व्यवस्थापयन्ति । मृतानां स्मारकस्य चित्रं स्वीकृत्य तां प्रवर्तयन्ति ते । तत्र भागग्राहिणः जनानां पुरतः आक्रोशनेन उच्चध्वनिना आवेशादिभिः वा दुःखं प्रकटयन्ति । शोभा-यात्रायाः अन्ते तानि चित्राणि दह्यन्ते, नद्यां समुद्रे वा मज्ज्यन्ते वा । दुःखज्ञापकानां रूपाकादीनां प्रदर्शनम् अपि मोहरम्-आचरणस्य अङ्गं भवति ।

मोहरम्पर्वणः आदिमानि दश दिनानि उपावासेन, शोकाचरणेन, प्रार्थनया वा याप्यन्ते मुस्लिमीयैः ।

# पञ्जाबराज्यीया जानपदकथा

पञ्जाबराज्यं भारतस्य वायव्यभागे (पश्चिमोत्तरयोः मध्ये) अस्ति । 'पञ्जाब'पदस्य अर्थः पञ्चानां नदीनां क्षेत्रम् इति । (पञ्ज = पञ्च, आब् = आपः (नद्यः)) पूर्वं बियास्, सतलज्, रावी, चेनाब्, झेलम् इत्येताः नद्यः पञ्जाबे प्रवहन्ति स्म । किन्तु देशविभाग-कारणतः केवले सतलज्-बियासनद्यौ भारते प्रवहतः । अवशिष्टाः तिस्रः नद्यः पाकिस्थानस्य अधीनाः जाताः ।

पञ्जाबराज्यस्य उत्तरभागे जम्मूकाश्मीर-राज्यं, पूर्वभागे हिमाचलप्रदेशः, दक्षिणभागे हरियाण-राजस्थानदेशौ, पश्चिमे पाकिस्थानं च अस्ति । चन्दीगढं पञ्जाबस्य राजधानी । हरियाणाराज्यस्य राजधानी अपि तदेव । एतस्य राज्यस्य विस्तारः ५०,००० चतुरस्र-कि.मी.मितः । जनसङ्ख्या च २४,२८९,-३०० मिता । एतस्य राज्यस्य राजभाषा पञ्जाबी, लिपिश्च गुरुमुखी ।

१९६६तमे वर्षे नवम्बरमासस्य प्रथमे दिनाङ्के पञ्जाबराज्यं हरियाणाराज्यं च निर्मिते ।

अस्माकं देशे पञ्जाबराज्ये एव कृषि-तन्त्रज्ञानम् ऐदम्प्राथम्येन हरितक्रान्तिरूपेण परिवर्तितं जातम् । यदा क्षीरक्रान्तिः तत्र जाता तदा प्रतिजनम् अधिकक्षीरप्राप्तिः अपि एतस्मिन् एव राज्ये आसीत् ।

## सप्तमः राजकुमारः

पूर्वं सतिन्दरः नाम राजा आसीत् । तस्य सप्त पुत्राः आसन् । प्रतिवेशिराज्ये भतिन्दरः नाम राजा आसीत् । तस्य सप्त पुत्र्यः आसन् । यदा पुत्राः प्राप्तवयस्काः जाताः तदा सतिन्दरः चिन्तितवान् यत् भतिन्दरस्य पुत्र्यः स्नुषात्वेन आनीताः चेत् वरं स्यात् इति । अतः विवाहप्रस्तावार्थं तेन मन्त्री प्रेषितः । एतं प्रस्तावं श्रुत्वा भतिन्दरः नितरां सन्तुष्टः । सप्तानां पुत्रीणाम् अपि विवाहं युगपत् एव कर्तुम् अवकाशः उपस्थितः इत्यतः सः सन्तुष्टान्तरङ्गः जातः आसीत् ।



सतिन्दरस्य सप्तमः पुत्रः राजेन्दरः अचिन्तयत् – 'अग्रजान् एव अनुकुर्वता मया किमर्थम् एषः विवाहप्रस्तावः अङ्गीकरणीयः ?' इति । अतः सः पितरं सूचितवान् यत् अहम् एतं विवाहं न अङ्गीकरोमि इति ।

''अये पुत्र ! वार्धक्ये मां किमर्थं पीडयति भवान् ? भवते निश्चिता कन्या उत्तमा अस्ति । ताम् एव परिणयतु'' इति सानुरोधं पुत्रम् उक्तवान् सतीन्दरः । किन्तु राजेन्दरः एतत् सर्वथा न अङ्गीकृतवान् ।

ततः षण्णां राजकुमाराणां षण्णां राजकुमारीणां च विवाहः महता वैभवेन प्रवृत्तः । सप्तमी राजकुमारी विवाहम् अप्राप्य पितृगृहे एव स्थितवती । अन्याः षट् राजकुमार्यः पतिगृहं गतवत्यः ।



राजेन्दरः स्वभगिनीं यथा परिणयेत् तथा षड् अपि राजकुमार्यः प्रयत्नं कृतवत्यः । ज्येष्ठा कोपेन उक्तवती – ''एवं तर्हि का वा परिणीयते भवता ? किम् अनार्कली एव परिणीयते ? कुत्र अस्ति सा ?'' इति ।

अन्याः अपि राजकुमार्यः उक्तवत्यः उपहासपूर्वकम् – ''अहो, भवान् अनार्कलीम् एव परिणेतुम् इच्छति इति भाति'' इति ।

''आम्, अहम् अनार्कलीम् एव परिणेष्यामि । एषोऽहं प्रस्थितः । यावत् सा न प्राप्यते तावत् अहं न प्रत्यागमिष्यामि'' इति अवदत् राजेन्दरः ।

पिता तं तर्जितवान् । माता अनुनीतवती । भ्रातरः तं निन्दितवन्तः । तथापि राजेन्दरस्य सङ्कल्पः शिथिलः न जातः । 'यदि अनार्कली वस्तुतः अपि स्यात् तर्हि ताम् अहं कथञ्चित् अन्विष्यामि एव' इति प्रतिज्ञां कृत्वा गृहात् निर्गतवान् सः ।

तेन बहुदूरं प्रयाणं कृतम् । बहूनि दिनानि अतीतानि । एवं दीर्घप्रयाणस्य अनन्तरं सः एकं शिथिलं शुष्कम् उद्यानं प्राप्तवान् । रथात् अवतीर्य सः वृक्षस्य अधः उपविष्टवान् । महती श्रान्तिः आसीत् तस्य । अतः सः तत्रैव निद्रावशं गतः । सूर्यास्तसमये सः जागरणं प्राप्तवान् । सः उद्याने सञ्चारं कृतवान् । तत्र एकः कासारः, कासारे केचन घटाः च दृष्टाः । सः जलं पीत्वा सङ्कल्पितवान् यत् शुष्कानि एतानि सस्यानि जलेन सिञ्चामि इति । जलसेचनसमये तेन कस्यचित् वृक्षस्य अधः कश्चन संन्यासी अपि दृष्टः ।

वस्तुतः तत् उद्यानं तेन संन्यासिना एव वर्धितम् आसीत् । षट् मासान् सः उद्यानपालनं

## बल्लै बल्लै......

पञ्जाबराज्ये द्विविधं नृत्यम् अतिप्रसिद्धम् । तयोः नाम गिद्धा भाङ्गा चेति । धान्यसङ्ग्रहस्य समाप्तेः अनन्तरं 'वैशाखि'दिने (एप्रिल्मासस्य त्रयोदशे दिनाङ्के) 'भाङ्गा'नृत्यं प्रचलति स्म पूर्वम् । इदानीं तु विवाहकार्यक्रमेषु, नववर्षारम्भसमारम्भेषु, जन्मदिनाचरणोत्सवेषु अन्येषु सामान्यकार्यक्रमेषु चापि तत् नृत्यं प्रचलति ।

एतस्य जानपदनृत्यस्य मुख्यविशेषः तावत् तालबद्धता, सवेत्रपडनिक्षेपः च । 'ढोल्'नामकं चर्मवाद्यम् एतस्मिन् नृत्ये उपयुज्यमानं प्रमुखं वाद्यम् । पञ्जाबीयघटनाः पुराणकथाः च अवलम्बन्ते अत्रत्यानि गीतानि ।



करोति स्म । पुनः षट् मासान् तपसि लीनः भवति स्म । तपसः समाप्तेः अनन्तरं सः शुष्कम् उद्यानं जलसेचनादिना उज्जीवयति स्म । राजकुमारः राजेन्दरः उद्यानं पालयन् तत्रैव वासं कृतवान् । 'यदि एषः महात्मा नेत्रोन्मीलनं कुर्यात् तर्हि अनार्कली कुत्र स्यात् इति वदेत्' इति निरीक्षा आसीत् तस्य ।

अल्पे एव काले राजकुमारस्य सेवायाः कारणतः उद्यानं सुन्दरतां प्राप्नोत् । तत् वर्णमयम् अपि जातम् । नेत्रानन्दकरम् अपि जातम् ।

एकस्मिन् दिने संन्यासी नेत्रे उन्मीलितवान् । अहो, किं सः पश्यति ! रमणीयम् उत्तमतया पोषितम् उद्यानं दृश्यते ! एतत् दृष्ट्वा सः नितरां सन्तुष्टः । उद्यानसस्यानि सिञ्चन् आगतः राजकुमारः नेत्रे उन्मीलितवन्तं संन्यासिनं दृष्टवान् । भक्त्या सः तं नमस्कृतवान् ।

''वत्स ! किम् एतस्य उद्यानस्य रक्षणं पोषणं च भवता एव कृतम् ?'' इति अपृच्छत् संन्यासी ।

''आम् । किन्तु मया अधिकं किमपि न कृतम् । जलसेचनमात्रं कृतम्'' इति विनयेन उक्तवान् राजकुमारः ।

''भवतः एतया सेवया अहं सन्तुष्टः अस्मि । यदि कापि अपेक्षा भवतः स्यात् तर्हि वदतु'' इति अवदत् संन्यासी ।

तदा राजकुमारः अवदत् - ''अहं राजकुमारः अस्मि । अतः ऐश्वर्यादिकं मम अस्ति एव । अहं तु अनार्कल्याः अन्वेषणार्थम् आगतः अस्मि । सा कुत्र अस्ति इति यदि भवान् वदेत् तर्हि महान् अनुग्रहः भवेत्'' इति ।

''एतं कन्दुकं नयतु । एषः आमार्गं शब्दं

करोति । दाडिमसस्यस्य अधः सः शब्दः स्थगितः भवति, कन्दुकः च उद्घाटितः भवति । तदा तस्मिन् सस्ये विद्यमानं बृहत् दाडिमफलं चिनोतु । तत्र अनार्कली प्राप्यते । तच्च फलं गृहप्राप्तिपर्यन्तं न उद्घाटनीयम् । उद्घाटितं चेत् अनार्कलीप्राप्तिः न भवेत्'' इति उक्तवान् संन्यासी ।

संन्यासी यथा उक्तवान् तथा कृत्वा राजेन्दरः बृहत् दाडिमफलं गृहं प्रति नीतवान् । गृहं प्राप्य विश्रान्त्यर्थम् उद्याने उपविष्टवान् सः । तदा तस्य मनसि सन्देहः उत्पन्नः -'यदि एतस्य अन्तः अनार्कली न स्यात् तर्हि प्रासादे सर्वे माम् उपहसेयुः' इति । अतः सः फलं विदारितवान् । तदा सुन्दरवस्त्रधारिणी, विविधाभरणभूषिता काचित् तरुणी तस्य पुरतः प्रत्यक्षा जाता । अकस्मात् पुरतः उपस्थितां सौन्दर्यखनीं दृष्ट्वा आश्चर्यं सोढुम् अशक्नुवन् राजेन्दरः मूर्च्छां गतः । अनार्कली तस्य शिरः स्वस्य अङ्के स्थापयित्वा किङ्कर्तव्यतामूढा सती उपविष्टवती ।

तावता तत्र हरिप्रिया आगतवती - ''सुन्दरि ! का भवती ? किं भवती करोति अत्र ?'' इति अनार्कलीं पृष्टवती सा ।

तदा निष्कपटा अनार्कली उक्तवती - ''मम दर्शनमात्रेण एषः मूर्च्छां गतः । तस्य सचेतनतां प्रतीक्षमाणा अस्मि अहम्'' इति ।

हरिप्रिया राजेन्दरं परिणेतुम् इच्छति स्म । सा चिन्तितवती - 'एतया सुन्दर्या धृतं वस्त्रम् आभरणानि च यदि अहं धरेयं तर्हि राजकुमारः माम् एव परिणयेत्' इति ।

अतः सा अनार्कलीम् उक्तवती - ''अहो



भवत्याः वस्त्राणां रमणीयता । एतेषाम् आभरणानां श्रेष्ठता तु वर्णनातीता । किं भवती एतेषां विनिमयं किञ्चित्कालम् अङ्गीकुर्यात् ? एतादृशानि वस्त्राणि आभरणानि च मया पूर्वं कदापि न धृतानि । एतानि किञ्चित्कालार्थं मह्यं ददातु कृपया'' इति ।

सरलहृदया अनार्कली तानि दत्तवती । सर्वाणि धृत्वा हरिप्रिया उक्तवती - ''एतानि धृतवती अहं कथं दृश्येय ? एतस्मिन् एव उद्याने एकः कूपः अस्ति । तत्र मम प्रतिबिम्बं यदि पश्येयं तर्हि वस्त्राणां सौन्दर्यं ज्ञायेत । किं भवती मया सह आगन्तुं शक्नुयात् ?'' इति ।

अनार्कली अङ्गीकारं सूचितवती । ततः ते कूपसमीपं गतवत्यौ । अनार्कली यदा कूपे प्रतिबिम्बं पश्यन्ती आसीत् तदा हरिप्रिया तां कूपे पातितवती, राजकुमारस्य समीपम् आगतवती च । यदा राजकुमारः जागरितः तदा सा उक्तवती यत् अहमेव अनार्कली इति । राजकुमारस्य अल्पः सन्देहः आगतः एव ।

मूर्च्छातः पूर्वं दृष्टा एषा एव न स्यात् इति । तथापि सः तया सह प्रासादं प्रविष्टवान् ।

प्रासादे तयोः स्वागतं जातं महता वैभवेन । ततः तयोः विवाहः अपि प्रवृत्तः । तौ सुन्दरे प्रासादे वासम् आरब्धवन्तौ । अल्पे एव काले राजधान्यां काचित् वार्ता प्रसृता यत् राजोद्यानस्थे कूपे सुन्दरम् एकं पुष्पं विकसितम् अस्ति इति । हरिप्रियया अपि एषा वार्ता श्रुता । अनन्तरदिने प्रातः एव महतीं शिरोवेदनाम् अभिनयन्ती सा सुप्तवती ।

एतां वार्तां श्रुत्वा तत्र आगतः राजेन्दरः पृष्टवान् - ''किम् अहं साहाय्यं करवाणि ?'' इति ।

तदा हरिप्रिया उक्तवती - ''राजोद्यानस्थे कूपे अपूर्वं किञ्चन पुष्पम् अस्ति इति श्रूयते । तत् उत्पाट्य तेन लेप्यं निर्माय ददातु । तस्य लेपनेन मम शिरोवेदना अपगच्छेत्'' इति ।

राजकुमारः कूपं गत्वा पुष्पम् उत्पाटितवान् । पेषणेन लेप्यं निर्माय पत्न्याः ललाटे लेपितवान् च । महती शिरोवेदना क्षणाभ्यन्तरे गता । हरिप्रिया लेप्यम् अपनीय राजभवनस्य पार्श्वे स्थिते अङ्गणे क्षिप्तवती ।

तदनन्तरक्षणे एव तत्र एकं रमणीयम् उद्यानं निर्मितम् अभवत् । तस्मिन् उद्याने एकं दाडिमसस्यम् अपि आसीत् । तस्मिन् सस्ये रक्तवर्णीयम् एकं रमणीयं फलं दृश्यते स्म ।

केषाञ्चित् दिनानाम् अनन्तरं हरिप्रिया यदा प्रासादस्य अट्टे विहरन्ती आसीत् तदा तत् उद्यानम्, उद्यानस्थं दाडिमसस्यं, सस्यस्थं फलं च अपश्यत् । एतेन तस्याः कोपः प्रवृद्धः । सा झटिति शयनगृहं गत्वा - ''अहो, महती वेदना ! प्रासादस्य पार्श्वे विद्यमानम् उद्यानं यावत् समूलं न नाश्यते तावत् मम एषा वेदना अपगता न भविष्यति'' इति वदन्ती हाहाकारम् आरब्धवती ।

तदा राजेन्दरः आज्ञापितवान् यत् राजधानीस्थाः जनाः उद्यानस्थेषु सस्यफलेषु यत् इच्छन्ति तत् नेतुम् अर्हन्ति इति ।

जनाः अहमहमिकया तत् उद्यानं प्रविश्य पुष्पाणि फलानि सस्यानि च नीतवन्तः ।

कश्चन बालकः अपि उद्यानम् आगतवान् । तस्मै तत् रमणीयं फलम् अरोचत । अतः

## करकौशलवस्तूनि



*पञ्जाबराज्यं करकौशलवस्तूनां निमित्तं प्रसिद्धम् । कटरूपेण भूमौ प्रसारयितुं योग्यानि अलङ्कारवस्तूनि सज्जीकुर्वन्ति अत्रत्याः महिलाः । तेषु साम्प्रदायिकविन्यासाः रच्यन्ते । पञ्जाबे 'फलकरी' नामकं सूचीकार्यम् अपि क्रियते प्राधान्येन । 'रूमाल' सदृशेषु वस्त्रेषु तत्रत्याः सूचीकर्मणा विविधान् विन्यासान् रचयन्ति । अत्र काष्ठेषु विविधविन्यासाः अपि रच्यन्ते काष्ठशिल्पिभिः ।*



## दर्शनयोग्यानि स्थलानि

अमृतसरं सिक्खानां कृते पवित्रं स्थानम् । 'अमृतस्य सरः (सरोवरम्)' इति अमृतसर-पदस्य अर्थः । एतत् नगरं चतुर्थेन सिक्ख-गुरुणा गुरुरामदासवर्येण निर्मापितम् । अमृत-सरस्थं सुवर्णमन्दिरं सिक्खानां पवित्रतमं स्थलम् । एतस्य मन्दिरस्य गोपुरं सुवर्णपटलैः निर्मितम् इत्यतः एतस्य सुवर्णमन्दिरम् इति नाम । १९१९ तमे वर्षे यत् दारुणं हननं यत्र प्रवृत्तं तत् स्थलं 'जलियन्वालाबाग्' अपि एतस्मिन् एव नगरे अस्ति ।

चन्दीगढनगरं भारते एव अत्याधुनिकं सुव्यवस्थितं च नगरम् । फ्रेञ्चवास्तुतज्ज्ञेन ली कार्बुसियर्वर्येण एतस्य नगरस्य विन्यासयोजना कृता । एतस्मिन् राजधानीनगरे राक्गार्डन्, रोस्गार्डन्, पिञ्जोरी गार्डन् इत्यादीनि प्रमुखाणि उद्यानानि ।

सः तत् फलम् उत्पाट्य गृहं नीत्वा मात्रे दत्तवान् । तौ रात्रौ गोधूमनिर्मितरोटिकां, सर्षपव्यञ्जनं च खादितवन्तौ । तदनन्तरं तौ फलं कर्तयितुम् उद्युक्तौ । यदा फलं कर्तितं तदा अनार्कली ततः आगता ।

''अलं भीत्या । अहम् अपि भवतोः गृहस्य सदस्या भविष्यामि । भवतोः साहाय्यम् अपि करिष्यामि'' इति अवदत् सा ।

तस्याः सौजन्यपूर्णव्यवहारं दृष्ट्वा वृद्धा माता नितरां सन्तुष्टा । सा तस्याः वासार्थम् अनुज्ञां दत्तवती । अनन्तरदिने अनार्कली एकं वस्त्रं स्वीकृत्य तत्र सुन्दराणाम् आकाराणां वयनं कृतवती । अतः सुन्दरं वस्त्रं सिद्धं जातम् ।

सा बालकम् उक्तवती – ''एतत् स्वीकृत्य राजकुमारस्य राजेन्दरस्य समीपं गच्छतु । सः योग्येन मूल्येन एतत् क्रेष्यति'' इति ।

बालकः तथैव अकरोत् । राजेन्दरः तत् दृष्ट्वा नितरां सन्तुष्टः सन् अपृच्छत् – ''एतत् केन सज्जीकृतम् ?'' इति ।

''मम भगिनी'' – बालकः अवदत् ।

'एतादृशं सुन्दरं वस्त्रं सज्जीकृतवती अपि परमसुन्दरी स्यात् एव' इति विचिन्त्य राजेन्दरः बालकम् अवदत् – ''सा मया द्रष्टव्या । अतः मां भवद्गृहं प्रति नयतु कृपया'' इति ।

बालकः तं स्वगृहं नीतवान् । राजेन्दरः अनार्कलीं झटिति अभिज्ञातवान् । ततः सः तस्याः मातुः अनुज्ञां प्राप्य तां परिणीतवान् । तदनन्तरं प्रासादं प्रतिगतः सः वञ्चनां कृतवतीं हरिप्रियां देशात् एव बहिष्कृतवान् ।

ततः राजेन्दरः अनार्कली च सुखेन चिर-कालं जीवितवन्तौ ।

# चटकस्य प्रश्नः

चटका स्वस्य लघुशिशुं सकृत् करुणया अपश्यत् । तेन शिशुना सह जाताः अन्ये सर्वे एतावता एव उड्डयनकलाम् अभ्यस्य ततः उड्डीय गताः आसन् । किन्तु अयम् एकः एव तां कलाम् इतोऽपि न अभ्यस्तवान् आसीत् ।

'अन्ये सर्वे यां लीलया अभ्यस्तवन्तः तस्याः अभ्यासार्थं, न जाने एषः कियन्तं कालम् अपेक्षते इति । एतस्मै विशेषशिक्षणं दातव्यम् । यद्यत् मया कर्तुं शक्यते तत्सर्वं करणीयम्' इति चिन्तितवती माता ।

सा स्वपुत्रम् उक्तवती - ''वत्स ! आगच्छतु, उड्डयनाभ्यासं करवाम'' इति ।

''अस्तु अम्ब !'' इति वदन् पुत्रचटकः मातरम् अनुसृतवान् । तस्य नेत्रयोः भीतिच्छाया काचित् दृश्यते स्म ।




मातुः विशेषप्रशिक्षणस्य कारणतः सः उड्डयन-समर्थः जातः । अल्पे एव काले सः ग्रामे सर्वत्र सञ्चारे अपि समर्थः जातः ।

पुत्रस्य प्रगतिं दृष्ट्वा माता नितरां सन्तुष्टा । तथापि तस्याः चिन्ता - 'मम पुत्रः कुत्रापि अपायं तु न प्राप्नुयात्' इति । अतः अपायाः कुतः कुतः सम्भाव्यन्ते इति सा पुत्रं बोधयितुम् इष्टवती ।

''वत्स ! इतः परं स्वस्य रक्षणं स्वयम् एव करणीयं भवता । अत्र उपकारकान् कांश्चन अंशान् अहं वदामि । शृणोतु । यदा भवान् क्षेत्रे भवति तदा कश्चन ज्येष्ठः धनुर्बाणादिभिः सह आगच्छति चेत्, बालः शिलाक्षेपणसाधनेन सह आगच्छति चेत् वा भवता झटिति उड्डयनं करणीयम् । अन्यथा भवतः मरणं भवेत्''

''अस्तु अम्ब !'' इति वदन् पुत्रचटकः शिरः अचालयत् ।

''कश्चन जनः क्षेत्रे अकस्मात् अवनमनं कृतवान् दृश्यते चेत् भवता झटिति उड्डयनं करणीयम् । प्रायः सः भवतः मारणाय शिलाखण्डम् उन्नेतुम् एव तथा कृतवान् भवति'' - माता अवदत् ।

''अस्तु अम्ब !'' इति अवदत् पुत्रः चटकः ।

''अनवनतस्य, हस्ते किमपि अवहतः वा पुरुषस्य दर्शनात् भवता भीतिः प्राप्तव्या नास्ति'' - माता अबोधयत् ।

''तादृशः अपि जनः यदि स्वकोषे शिलाखण्डं स्थापयेत् तर्हि किं कुर्याम् ?'' इति अपृच्छत् पुत्रचटकः ।

''यावत् मया बोधनीयं ततोऽपि अधिकं ज्ञायते भवता । अतः निश्चिन्ता अहम् । इतः परं स्वस्य रक्षणं कर्तुं भवान् स्वयं शक्नुयात् एव । शुभास्ते पन्थानः सन्तु'' इति उक्तवती माता ।



# विघ्नेश्वरः

तारकासुरः निरङ्कुशः आसीत् । त्रिपुरासुराः नाम तत्पुत्राः अपि तपस्यया भगवतः अनुग्रहं प्राप्तवन्तः आसन् । ते उड्डयनसमर्थानि त्रीणि नगराणि निर्माय प्रजाः बहुधा पीडयन्ति स्म । ऊर्ध्वभागतः अग्निं वर्षन्तः ते नगराणि ग्रामान् च ज्वालयन्ति स्म ।

देवाः ज्ञातवन्तः यत् एतेषां संहारं कर्तुं भगवान् शिवः एकः एव समर्थः, न अन्यः इति । अतः ते शिवमन्दिरस्य पुरतः उपस्थाय विविधैः स्तोत्रैः प्रार्थनां कृतवन्तः ।

शिवः सद्योविवाहितः आसीत् । आदौ सः देवानां प्रार्थनायाः विषये विशेषावधानं न दत्तवान् । किन्तु यदा त्रिपुरासुराणां दुराचाराः ज्ञाताः तदा सः तूष्णीं स्थातुं न शक्तः । क्रोधाविष्टः सः त्रिशूलम् उन्नीय त्रिपुरासुराणां संहारार्थं ततः निर्गतवान् ।

एतस्मिन् एव अवसरे कश्चन राक्षसः जटायुक्तगजस्य रूपं प्राप्य जनान् पीडयन् आसीत् । तस्य आकारः स्थूलः दीर्घः उन्नतः च आसीत् । अतः एव तस्य नाम जातम् आसीत् गजासुरः इति । सः महाशिवभक्तः । शिवात् अन्यः कोऽपि तं यथा न मारयेत् तथा वरं प्राप्तवान् आसीत् सः ।

''भवान् आत्मनि एव शिवं यदि वासयेत् तर्हि वरं भवेत्'' इति नारदः तं सूचितवान् । नारदस्य सूचना तस्मै अरोचत । सः अचिन्तयत् यत् नारदः मम हिताय एव एवं वदन् अस्ति इति । अतः सः शिवस्य पूजाम् आरब्धवान् । तपस्यया शिवं तोषयितुं सः समर्थः जातः । त्रिपुरासुराणां संहारार्थं निर्गतः शिवः मध्येमार्गं गजासुरस्य प्रार्थनायाः अनुगुणं तदीये हृदये वासम् आरब्धवान् ।



'शिवः यदि गजासुरस्य हृदये वसेत् तर्हि त्रिपुरासुराणां संहारः कथं भवेत् ? नववध्वाः पार्वत्याः प्रेम कथं सफलं भवेत् ? शिव-पार्वत्योः मेलनं विना अस्माकम् आशा सफला भवितुम् न अर्हति' इति चिन्तयन्तः देवाः मार्गान्तरम् अपश्यन्तः हतोत्साहाः जाताः आसन् । तेषाम् एतां स्थितिं दृष्ट्वा नारदः अवदत् - ''शिवः आशुतोषः । स्तुत्या वशीकर्तुं शक्यः सः'' इति । तस्य वचनस्य तात्पर्यम् अवगच्छन्तः देवाः गजासुरस्य पुरतः स्थित्वा शिवस्य स्तोत्रम् आरब्धवन्तः । उच्चस्वरेण शिवं स्तुतवन्तः ते ।

गजासुरः अपि तैः सह तन्मयतया प्रार्थनां कुर्वन् आसीत् । गजासुरस्य हृदये स्थितं शिवलिङ्गं विकासं प्राप्नुवत् तदीयं हृदयं विभिद्य बहिः आगच्छत् । तदा गजासुरः क्षीणप्राणः सन् क्षीणस्वरेण अवदत् - ''अहं भवति विश्वासं कृतवान् । किन्तु भवान् मां मारितवान् । एतादृशं कृत्यं किं शोभते ? महत् अन्याय्यं कृतं भवता'' इति ।

शिवः तस्य सान्त्वनं कुर्वन् उक्तवान् - ''गजासुर ! महाशिवभक्तत्वेन जनाः भवतः प्रशंसां करिष्यन्ति । गजशिरः मम सान्निध्यं प्राप्स्यति । अहम् अपि गजचर्म धरिष्यामि'' इति । ततः सः गजासुरम् आत्मनि लीनं कृतवान् । गजासुरः मोक्षं प्राप्तवान् ।

शिवः भूमिं रथं कृत्वा, सूर्यचन्द्रौ चक्रे कृत्वा, वेदान् अश्वान् कृत्वा, ब्रह्माणं च सारथिं विधाय, मेरुपर्वतं धनुः कृत्वा, विष्णुं च बाणं कृत्वा, नन्दी, भृङ्गी, भृङ्गी इत्यादिभिः प्रमथगणैः सह त्रिपुरासुराणां संहारार्थं निर्गतवान् । तम् अनुसरन्तः त्रिकोटिदेवाः अपि आयुधानि गृहीत्वा प्रस्थितवन्तः ।

गृहे उपविष्टा पार्वती नीरसताम् अनुभवन्ती आसीत् । शिवः कदा प्रत्यागच्छेत् इति न जानाति स्म सा । तस्मिन् समये नारदः तत्र आगत्य अवदत् - ''वत्से ! पार्वति ! यदा शिवः भवतीं परिणीतवान् तदारभ्य तारकासुरः भयेन कम्पमानः अस्ति । यदाकदाचिदपि सः भवत्याः हानिं कुर्यात् । वज्रदन्तः अपि तेन सह अस्ति । सः माया-विद्यानिपुणः । अतः भवत्या जागरूकतया भवितव्यम्'' इति ।

एतत् श्रुत्वा पार्वती चिन्ताक्रान्ता जाता । आत्मनि एव कोपः उत्पन्नः । 'एतं कोपं निवारयितुं स्नानं करोमि चेत् वरम्' इति सा

अचिन्तयत् । सा तैलेन शरीरं लिप्तवती । किञ्चित्कालानन्तरं शरीरे स्थितं तैलं पिण्डीकृत्य एकां मूर्तिं रचितवती । तां मूर्तिं भूमौ स्थापयित्वा वात्सल्यपूर्णदृष्ट्या दृष्टवती सा । तावता तत्र कश्चन बालकः प्रत्यक्षीभूतः । पार्वती तं पृष्टवती – "कः भवान् ?"

"भवत्याः शरीरकान्त्या मिश्रितेन तैलेन उत्पन्नः बालकः अहम् । भवत्याः पुत्रः गणपतिः अस्मि" इति अवदत् बालकः ।

पार्वती तम् उन्नीय प्रीत्या आलिङ्गितवती । ततः तस्मै एकम् अङ्कुशं यच्छन्ती सा उक्तवती – "वत्स ! अहं स्नानार्थं गच्छन्ती अस्मि । कश्चन कीटोऽपि यथा न आगच्छेत् तथा रक्षणं करणीयं भवता" इति आज्ञाप्य सिंहद्वारसमीपे तम् उपवेशितवती सा ।



"अम्ब ! महती बुभुक्षा मम । खादितुं किमपि ददातु" इति अवदत् बालकः ।

तदा पार्वती पिष्टेन खाद्यं निर्माय तस्मै दत्त्वा स्नानार्थं गतवती ।

तारकासुरः अचिन्तयत् यत् पार्वत्याः संहारः कृतः चेत् शिवस्य पुत्रस्य उत्पत्तेः सम्भावना एव अपगता भविष्यति, मां च कोऽपि संहर्तुं नार्हति इति । अतः पार्वतीसंहारकार्यं सः वज्रदन्ताय अर्पितवान् । वज्रायुधम् अपि स्वदन्तैः खण्डयितुं समर्थः आसीत् सः। सः कदाचित् मूषकरूपेण गत्वा पर्वतम् उन्मूलितवान् । अतः एव मूषकासुरनाम्ना एव सः प्रसिद्धः जातः आसीत् । सः पार्वत्याः अपहरणार्थं गजकर्णिगोकर्णिनामकौ स्वस्य उभौ अनुचरौ प्रेषितवान् ।

तौ नितरां बलशालिनौ आस्ताम् । बालकरूपं प्राप्य गर्वेण एव तौ गणपतेः समीपं गतवन्तौ । गणपतिः हस्तेन एकम् अङ्कुशं गृहीत्वा कोऽपि आगच्छति किम् इति इतस्ततः परिशीलयन् आसीत् । तौ राक्षसौ गणपतिसमीपं गत्वा उक्तवन्तौ – "आगच्छतु वत्स ! क्रीडाम" इति ।

"आदौ किञ्चित् खादतां तावत्" इति वदन् गणपतिः तयोः दिशि खाद्यं क्षिप्तवान् । तस्य खादनेन तयोः शिरोभ्रमणम् आरब्धम् । तौ यदा पलायनम् आरब्धवन्तौ तदा गणपतिना क्षिप्तं खाद्यं महाशिलारूपं प्राप्य तयोः पुरतः अपतत् । तेन घट्टितौ तौ राक्षसौ अधोमुखतया भूमौ पतितौ । तौ उद्दिश्य गणपतिः उक्तवान् – "कर्णौ गृहीत्वा त्रिवारम् उपवेशनोत्थानं क्रियताम् । ततः कपोलं ताडयद्भ्याम् इतः धावनीयम्" इति ।



गणपतेः आज्ञां शिरसा वहन्तौ तौ यथोक्तं कृत्वा ततः पलायितवन्तौ । यथापूर्वं राक्षसरूपं प्राप्य तौ वज्रदन्तस्य समीपं गत्वा प्रवृत्तं सर्वं विस्तरेण निवेदितवन्तौ ।

वज्रदन्तः कोपेन सकृत् हुंकृत्य मूषकरूपेण सिंहद्वारसमीपम् आगतवान् । द्वारसमीपे एकं रन्ध्रं कृत्वा अन्तः गन्तुं प्रयासं कृतवान् । तावता एतत् लक्षितवान् गणपतिः कटिसूत्रं पाशत्वेन सज्जीकृत्य तस्य दिशि क्षिप्तवान् । मूषकासुरः बद्धः अभवत् । गणपतिः सूत्रम् आकृष्य मूषकस्य पुच्छं गृहीतवान् । मूषकम् उन्नीय भ्रामयन् दूरे क्षिप्तवान् च ।

गणपतिना क्षिप्तः मूषकासुरः स्वस्य राज्यस्य अन्तःपुरस्य पुरतः सशब्दं पतितः । तस्य पत्नी धवला महादेवभक्ता । स्वस्य सुमङ्गलीत्वं यथा स्थिरं स्यात् तथा वरं प्राप्तवती आसीत् सा । सा त्रस्तं पतिम् उत्थाप्य भीतेः कारणं पृष्टवती । आत्मना प्राप्तस्य वरस्य वार्तां श्रावयित्वा पतिं सान्त्वयन्ती उक्तवती - ''पार्वत्याः हानिं कर्तुं प्रयासः इतःपरं मास्तु'' इति ।

त्रिपुरासुरान् संहृत्य ईश्वरः पत्न्याः मुखस्य दर्शनार्थं वेगेन स्वगृहम् आगतवान् । यदा सः गृहं प्रवेष्टुम् उद्युक्तः तदा बालकः गणपतिः तं निवारितवान् । आश्चर्यचकितः शिवः पृष्टवान् - ''कः भवान् ?'' इति ।

बालकः हसन् उक्तवान् - ''अहम् अम्बायाः पुत्रः । मायाविनः वेषान्तरं धृत्वा सञ्चरन्तः सन्ति । अतः तस्याः आदेशस्य अनुगुणम् अत्र रक्षणकार्ये अस्मि । अन्तः केनापि न प्रवेष्टव्यम् इति मातुः आज्ञा'' इति ।

''अहम् ईश्वरः अस्मि । भगवान् अस्मि'' इति अवदत् शिवः ।

''भवान् यःकोपि स्यान्नाम । किं तेन मम ? भगवान् नास्ति लोके । प्रकृति-स्वरूपिणी माता एव परमश्रेष्ठा । प्रकृत्याः आज्ञायाः पालनम् एव महाधर्मः । अतः अहं मातुः आज्ञां पालयिष्यामि एव'' इति दृढस्वरेण अवदत् बालकः ।

त्रिपुरसंहारकस्य शिवस्य स्तुतिं कुर्वन्तः जयघोषं च कुर्वन्तः प्रमथगणीयाः तत्र उपस्थिताः । शिवबालयोः विवादं श्रुत्वा ते आश्चर्यचकिताः जाताः । ते प्रतिमावत् स्थित्वा तयोः सम्भाषणं श्रुतवन्तः ।

''भवान् अल्पवयस्कः अल्पज्ञः । भगवान् नास्ति इति कथनं न युक्तम् । परब्रह्मतत्त्वम् एव सर्वश्रेष्ठम्'' इति अवदत् शिवः ।



''ज्येष्ठस्यापि भवतः ज्ञानं तु अपूर्णम् । आदिशक्तितः एव त्रिमूर्तयः, जगच्चापि विनिर्गतम् । एतम् अंशं संक्षेपेण श्रावयामि । शृणोतु तावत्'' इति उक्त्वा बालकः आदिशक्तिविषये कथनम् आरब्धवान् –

''आदिशक्तिः शरीरं धृत्वा यदा विधूननं कृतवती तदा तस्याः शरीरतः रक्त-नील-श्वेतवर्णाः पतिताः । ततः ब्रह्म-विष्णु-महेश्वराः समुद्भूताः । ब्रह्मा विष्णुः च देव्याः कथनं न अङ्गीकृतवन्तः । अतः आदिशक्तिः तृतीयं नेत्रम् उद्घाट्य तौ भस्मीकृतवती । महेश्वरः तु चतुरः । सः उक्तम् अङ्गीकृतवान् । सः देव्याः तृतीयं नेत्रम् आवश्यकम् इति देवीं प्रार्थितवान् । देवी स्वललाटे स्थितं तृतीयं नेत्रं शिवस्य ललाटे योजितवती । तदा महेश्वरः झटिति तृतीयं नेत्रम् उद्घाट्य देवीं भस्मसात्-कृतवान् । तदा अग्निकणाः सर्वत्र प्रसृताः । एकं तेजोमण्डलं तत्र स्थापितं जातम् । भस्म सर्वत्र प्रसृतम् । ततः एतत् जगत् निर्मितम् अभवत् । या देवी दग्धा आसीत् सा पूर्वतनेन एव रूपेण प्रकटिता अभवत् । अतः सा 'महामाया' इति उच्यते । महेश्वरः तस्याः स्तुतिं कृतवान् इत्यतः सः लयकार्ये तया नियुक्तः । ब्रह्माणं विष्णुं च सा पुनः उज्जीवित-वती । यः भस्मशेषः आसीत् तं त्रिधा विभज्य त्रीन् लोकान् सृष्ट्वा तेषां पालनार्थं तान् त्रीन् आदिश्य सा अन्तर्हिता जाता ।''

''भवतः उक्ता कथा सर्वथा मिथ्या''

इति अवदत् शिवः ।

''यदि मम कथा मिथ्या स्यात् तर्हि भगवान् सर्वं सृष्टवान् इत्येतत् भवतः कथनम् अपि मिथ्या स्यात् खलु ? देवीतः एव सर्वम् उत्पन्नम् इत्येतत् युक्तम्'' इति अवदत् बालकः ।

एतं वादं शृण्वतां सर्वेषां मुखं कान्तिहीनं जातम् । बालकं दृष्ट्वा विष्णुः स्मितमुखतया स्थितः आसीत् । ब्रह्मा बालकस्य वादसरणिं मनसि एव श्लाघितवान् । स्त्रीणां मुखे सन्तोषः दृश्यते स्म ।

शिवस्य मुखं रक्तवर्णोपेतं जातम् आसीत् । सः बालकम् अवदत् – ''दर्शनेन भासते यत् भवान् अल्पवयस्कः इति । किन्तु वचनानि तु महन्ति । भोः, भवतः कोऽपि अपायः यथा न भवेत् तथा व्यवस्थाम् अहं करोमि । भवान् द्वारदेशतः अपसरतु'' इति ।

''यावत् अहं जीवामि तावत् अन्तः भवतः प्रवेशः न भवेत्'' इति अवदत् बालकः ।

कोपवशात् शिवस्य विवेकः नष्टप्रायः । सः प्रमथगणीयान् आदिष्टवान् – ''एतम् आकृष्य दूरं नयन्तु'' इति । प्रमथगणीयाः तथैव कर्तुम् उद्युक्ताः ।

तदा गणपतिः – ''स्वस्य सामर्थ्ये अविश्वासवान् भवान् स्वगणीयान् आदिष्टवान् मम अपसरणार्थम् । किम् एतत् उचितम् ? भवतु नाम । अहम् अपि गणाधिपतिः एव'' इति वदन् स्वस्य अङ्कुशेन भूमिं सकृत् प्रहृतवान् । तदा गणपत्याकारकाः एव लक्षशः जनाः तत्र उद्भूताः अभवन् । शृङ्गी, भृङ्गी, नन्दी, तुण्डी इत्यादीन् ते गदाशूलादिभिः मारितवन्तः । एतत् दृष्ट्वा अन्ये सर्वे ततः पलायितवन्तः । तदा गणपतेः गणीयाः अपि अदृश्यतां गताः ।

शिवः उग्रः सन् त्रिशूलम् उन्नीतवान् । बालकः अङ्कुशेन त्रिशूलं निवारितवान् । ततः सः हसन् – ''यावत् मात्रा दत्तः एषः दण्डः मम हस्ते भविष्यति तावत् मम केशान् कम्पयितुम् अपि कोऽपि न शक्नोति । यत् भवान् कर्तुम् इच्छति तत् करोतु । अथवा किम् एतेन अङ्कुशेन ? मां माता एव रक्षिष्यति'' इति वदन् अङ्कुशदण्डं दूरे क्षिप्तवान् ।

शिवः क्रोधेन मूर्च्छितः जातः इव । सः क्रोधोन्मत्तः सन् बालकम् उद्दिश्य त्रिशूलं क्षिप्तवान् । अनन्तरक्षणे बालकः 'अम्ब' इति आक्रन्दनं कुर्वन् भूमौ पतितवान् । तदीयं शिरः शरीरतः पृथग्भूय ज्योतिः इव प्रकाशमानं सत् अन्तरिक्षे लीनं जातम् ।





# अपूर्वसामर्थ्यशालिनी वीणा

प्राचीनकालीनघटना एषा । कस्मिंश्चित् ग्रामे कश्चन सङ्गीतविद्वान् निवसति स्म । तस्य त्रयः पुत्राः । सर्वे मिलित्वा सङ्गीतगोष्ठीं सञ्चालयन्ति स्म । ततः कुटुम्बपोषणं भवति स्म । कदाचित् पिता अस्वस्थः जातः । तत्फलतः तस्य अङ्गुलयः शक्तिहीनाः जाताः । तस्य सम्भाषणशक्तिः अपि विलुप्ता जाता ।

तं सम्यक् परीक्ष्य ग्रामवैद्यः अवदत् - ''एषः सामान्यः रोगः न । प्रसिद्धः राजवैद्यः एकः एव एतस्य चिकित्सां कर्तुं समर्थः । मादृशः सामान्यः वैद्यः किमपि कर्तुं न अर्हति । राजवैद्यस्य चिकित्सा प्राप्तव्या चेत् अस्माकं देशस्य मूर्खस्य राज्ञः अनुज्ञा प्राप्तव्या भवति । राजा सन्तुष्टः चेदेव राजवैद्यस्य साहाय्यं प्राप्तुम् अनुज्ञा लभ्येत । किन्तु सर्वे वदन्ति यत् शिला अपि द्रवीकर्तुं शक्येत, परमशठम् अपि तोषयितुं शक्येत, किन्तु महाराजं प्रसादयितुं सर्वथा न शक्यते । अतः भवतः पितुः स्वास्थ्यलाभः दुश्शकः एव इति मम मतिः । तथापि प्रयत्नं करोतु'' इति ।

एतत् श्रुत्वा ज्येष्ठः पुत्रः अवदत् - ''राजा महामूर्खः इति अहं जानामि, तथापि मम वीणावादनेन अहं तं सन्तोषयितुं शक्नोमि इति मम दृढः विश्वासः अस्ति । राजानं सन्तोष्य अहं राजवैद्यस्य साहाय्यं स्वीकर्तुम् अनुज्ञां प्राप्स्यामि । यदि पिता स्वास्थ्यलाभं प्राप्नुयात् तर्हि महत् सौभाग्यं प्राप्तम् इव'' इति ।

सः अचिरात् एव राजधानीं गत्वा राजानं दृष्ट्वा अवदत् - ''प्रभो ! वीणावादने अहं निष्णातोऽस्मि । वीणावादनेन भवन्तं सन्तृप्तं कर्तुं शक्नोमि इति मम विश्वासः अस्ति । यदि एतत् अहं कर्तुं शक्नुयां तर्हि राजवैद्यद्वारा मम पितुः चिकित्सां कारयितुम् अनुज्ञा दातव्या इति मम प्रार्थना'' इति ।

एतत् श्रुत्वा राजा हसन् उक्तवान् - ''मम आस्थाने मम सेवकाः अपि वीणावादन-निपुणाः एव सन्ति । आस्थानिकानां सर्वेषाम



खिन्नौ । सर्वं श्रुत्वा द्वितीयपुत्रः उक्तवान् - ''वीणावादने बहवः निपुणाः अद्य लभ्यन्ते इत्यतः राजा भवन्तं पराजेतुं शक्तः । किन्तु मृदङ्गस्य तु न तथा । मृदङ्गवादनक्षेत्रे विरलाः एव प्रावीण्यं प्राप्तवन्तः दृश्यन्ते । अतः अहं मृदङ्गक्षेत्रे प्रावीण्यं प्रदर्श्य राज्ञः प्रशंसां प्राप्य राजवैद्येन पितुः चिकित्सां कारयिष्यामि'' इति ।

सोऽपि राजानं दृष्ट्वा अवदत् - ''मृदङ्ग-वादनक्षेत्रे मत्समानः कोऽपि नास्ति । यदि इच्छा तर्हि परीक्षा क्रियताम् । यदि अहं सफलः स्यां तर्हि राजवैद्येन मम पितुः चिकित्सां कारयितुम् अनुज्ञा दातव्या'' इति ।

राजा तम् उपेक्षया पश्यन् अवदत् - ''वीणावादने पराजयं प्राप्तवतः सहोदरः स्यात् खलु भवान् ! प्रायः भवान् न जानाति यत् अहं सङ्गीतस्य सर्वेषु अङ्गेषु निपुणः इति । यदि भवान् मया सह स्पर्धेत तर्हि भवतः भ्रातुः या गतिः सा एव गतिः स्यात् भवतः अपि । मया उक्तः नियमः अङ्गीक्रियते चेत् स्पर्धा प्रचलतु नाम'' इति ।

अनन्तरदिने मृदङ्गस्पर्धा प्रवृत्ता । राज्ञः मृदङ्गवादनं सर्वथा अनुत्तमम् आसीत् । श्रवणकठोरम् अपि आसीत् तत् । द्वितीय-पुत्रस्य मृदङ्गवादनं तु अत्युत्कृष्टम् आसीत् । श्रवणमधुरम् अपि आसीत् तत् । तथापि किं प्रयोजनं तेन ? राजा एव विजयी इति घोषितः जातः । एतस्य परिणामतः द्वितीयपुत्रः अपि कशाप्रहारान् प्राप्य निर्गतवान् ।

अग्रजयोः उभयोः अपि दुर्गतिः जाता इति ज्ञातवतः तृतीयपुत्रस्य कोपः नितरां प्रवृद्धः । ''सङ्गीतविदुषः उभौ अपि पुत्रौ

आशयः अस्ति यत् वीणावादने अहम् अद्वितीयः इति । यदि एतस्यां विद्यायां प्रौढिमा अस्ति इति भवतः आत्मविश्वासः तर्हि स्पर्धा प्रवर्तताम् । यदि भवतः जयः तर्हि भवदीया इच्छा पूर्णा भवेत् । यदि पराजयः तर्हि पञ्च-विंशतिः कशाप्रहाराः प्राप्तव्याः भवता । जनाः एव एतस्य निर्णायकाः'' इति ।

ज्येष्ठपुत्रः एतं प्रस्तावम् अङ्गीकृतवान् । अनन्तरदिने राजसभायां स्पर्धा प्रवृत्ता । ज्येष्ठपुत्रः एव वीणावादने अधिकनैपुण्यं प्रदर्शितवान् । तथापि जनाः राजानम् एव विजयिनम् उक्तवन्तः, यतः ते राजतः नितरां भीताः भवन्ति स्म । पूर्वनिर्णयस्य अनुगुणं ज्येष्ठपुत्रेण पञ्चविंशतिः कशाप्रहाराः प्राप्ताः ।

ज्येष्ठभ्रातुः दुरवस्थां ज्ञात्वा अन्यौ सहोदरौ

अपमानितवान् अयं राजा । वस्तुतः तेन सङ्गीतशास्त्रस्य एव अवमाननं कृतम् इव ! एतादृशः मूर्खः योग्येन क्रमेण बोधितः चेदेव मम तृप्तिः । यदि अहम् एवं कर्तुं न शक्नोमि तर्हि किं वा मम प्राणधारणेन प्रयोजनम् ?'' इति उक्त्वा सः वीणां मृदङ्गं शहनायीवाद्यं च स्वीकृत्य राजधानीं प्रति प्रस्थितवान् ।

राजधानीं प्राप्य सः एकान्ते उपविश्य त्रीणि अपि वाद्यानि वादयितुम् उद्युक्तः जातः । वाद्यवादने एव समग्रम् अवधानं निक्षिप्तं तेन । सामान्याः जनाः तस्य नैपुण्यं दृष्ट्वा सन्तुष्टाः । दिनत्रयं यावत् निरन्तरवाद्यवादनतः तस्य अङ्गुलीभ्यः रक्तं निर्गतम् । राज्ञा अपि एषा वार्ता ज्ञाता । सः मन्त्रिभिः सह तं द्रष्टुम् आगतवान् । राजानम् उपस्थितं दृष्ट्वा तृतीयपुत्रः उत्थाय नमस्कारं कृतवान् । राजा तम् अपृच्छत् – ''कः भवान् ? किमर्थम् अत्र आगतं भवता ?'' इति ।

तदा तृतीयपुत्रः विनयेन अवदत् – ''अहं पर्वताञ्चले निवसतः भैरवनामकस्य पुत्रः । मत्समवयस्कः कश्चन बालः कुतश्चित् मम ग्रामम् आगच्छति स्म, मया सह क्रीडति स्म च । कदाचित् ताडरसेन निर्मितं गुडं खादितुम् इष्टवान् सः । अहं खड्गं स्वीकृत्य ताडफलानि आनेतुं प्रस्थितः । मया सह सोऽपि आगतः । सः च घर्मकालः । महान् आतपः बाधते स्म । ग्रामात् बहिः आगमनस्य अनन्तरं सः आतपपीडानिवारणार्थं कासारे स्नानं कर्तुं गतवान् । किन्तु जलं प्रविष्टः सः दीर्घ-कालानन्तरम् अपि न प्रत्यागतः एव । मयि भीतिः उत्पन्ना । अहं कटौ खड्गं बद्ध्वा कासारं प्रविष्टवान् । कासारतलं प्राप्तं मया ।



तत्र कश्चन विचित्रः सर्पः तं बालकं गिलन् आसीत् । क्रुद्धेन मया क्षणात्मकविलम्बम् अपि अकृत्वा खड्गेन सः सर्पः संहृतः, खण्डीकृतः च । एवं मम सुहृत् रक्षितः अभवत् । सः कृतज्ञतां प्रकटयन् सानुरोधं माम् उक्तवान् यत् मम गृहं प्रति आगन्तव्यम् एव इति । अहं तत् अङ्गीकृत्य पर्वतान् अतिक्रम्य तस्य गृहं गतवान् । पर्वतमूले स्थिता गुहा एव तस्य गृहम् आसीत् । गुहायां प्रसृतकेशा काचित् वृद्धा किमपि आघर्षयन्ती आसीत् । सा काचित् मन्त्रवादिनी । तस्याः नेत्रे अग्निगोलके इव प्रकाशेते स्म । आकारः तु विकृतः आसीत् । मम मित्रेण तस्याः समीपे गतम् । तं दृष्ट्वा सा मन्त्रवादिनी प्रीत्या उन्नीय आलिङ्गितवती । ''कुत्र गतम् आसीत् भवता ? आगमने एतावान् विलम्बः



न । मम शत्रुभूता मन्त्रवादिनी तेन सर्परूपेण आसीत् । ताम् एव मारितवान् भवान् । एतां मारयितुम् अद्यावधि मया बहुधा प्रयत्नः कृतः आसीत् । किन्तु साफल्यं न प्राप्तम् आसीत् मया । ताम् एव मारितवान् भवान् । मम पुत्रः अपि भवता रक्षितः । एतस्य प्रतिफल-रूपेण अहं भवते एकाम् अपूर्वां वीणां, मृदङ्गं, शहनायीवाद्यं च ददामि । यदि एतां वीणां भवान् योग्यक्रमेण वादयेत् तर्हि कौचित् युवकौ प्रत्यक्षीभूय मृदङ्गं शहनायीवाद्यं च वादयन्तौ जनान् आश्चर्यचकितान् करिष्यतः'' इति अवदत् ।

''तया दत्तां वीणां दिनत्रयतः अहं वादयन् अस्मि । तथापि तौ युवकौ तु प्रत्यक्षौ न

किमर्थम् ? भवतः निमित्तं भवत्प्रियं खाद्यम् अपि सज्जीकृतम् अस्ति मया'' इति ।

तदा सः बालकः मां परिचाययन् ताम् अवदत् - ''अम्ब ! अद्य एतस्य कारणतः मम प्राणाः रक्षिताः अभवन् । एषः मम आत्मीयः सुहृत्'' इति । अनन्तरं सः मातरं प्रवृत्तं समग्रं निवेदितवान् ।

मन्त्रवादिनी झटिति ततः गत्वा केनचित् रसेन भित्तिं लिप्तवती । ततः कमपि मन्त्रम् अस्पष्टस्वरेण पठितवती । तदा सः भित्तिभागः दर्पणः इव जातः । तत्र कासारः दृष्टः, मृतः घोरसर्पः अपि दृष्टः । ततः सा मन्त्रवादिनी गृहात् बहिः गत्वा अपरं कमपि मन्त्रं पठितवती । अनन्तरक्षणे एव मृतः सर्पः तस्याः अङ्गणे पतितः । तं दृष्ट्वा नितरां सन्तुष्टा सा मम स्कन्धे हस्तं संस्थाप्य - ''साधु बालक, साधु । भवता मारितः सः सर्पः सामान्यः

जातौ । मम तु भाति यत् सा मन्त्रवादिनी मां वञ्चितवती इति'' इति ।

राजा तस्य वचनं श्रुत्वा उच्चैः हसन् - ''अये मूर्ख ! मन्त्रवादिनी वञ्चितवती स्यात् इति भवतः चिन्तनम् अनुचितम् । तया किम् उक्तम् इति स्मर्यते खलु ? योग्येन क्रमेण वीणा वादिता चेत् उभौ प्रत्यक्षौ भवतः इति खलु तया उक्तम् ? भवान् तु योग्येण क्रमेण वीणावादनम् अजानन् मन्त्रवादिन्यां दोषम् आरोपयन् अस्ति । अहम् एतां वीणां वादयिष्यामि । तदा तौ पुरुषौ प्रत्यक्षीभूय कथं मृदङ्गं शहनायीवाद्यं च वादयतः इति द्रक्ष्यामि'' इति उक्त्वा वीणाम् उन्नीय अङ्गुल्या झङ्कारं कृतवान् ।

ततः राज्ञा वीणावादनम् आरब्धम् । दीर्घकालं वीणावादनं कृत्वा राजा श्रान्तः ।

तथापि तौ पुरुषौ प्रत्यक्षौ न जातौ एव ।

राजा प्रक्षुब्धः जातः । सः अवदत् - ''अहं सङ्गीतसम्राट् अस्मि । तथापि मम पाण्डित्यम् अत्र अकिञ्चित्करं जातम् । एषा वीणा असाधारणी इव भाति । सङ्गीतक्षेत्रे मत्तः अपि श्रेष्ठः एव एतां वीणां यदि वादयेत् तर्हि तौ पुरुषौ प्रत्यक्षौ भवेताम् । नवरात्रोत्सवावसरे एतद्विषये अहं स्पर्धाम् एकाम् आयोजयिष्यामि । यः वीणावादनेन तौ पुरुषौ प्रत्यक्षौ कर्तुं शक्ष्यति तस्मै अपूर्वम् उपायनं दास्यामि'' इति । ततः सः तां वीणां, मृदङ्गं, शहनायीवाद्यं च स्वीकृत्य राजधानीं प्रतिगतवान् । अनन्तरदिने एव तेन एतद्विषये घोषणा अपि कारिता ।

अचिरात् एव नवरात्रोत्सवः उपस्थितः । वीणावादनस्पर्धा प्रवृत्ता । बहवः वीणावादकाः आगत्य तां वीणां वादितवन्तः । किन्तु कोऽपि प्रत्यक्षः न अभवत् । अन्ते तृतीयः पुत्रः राजानं प्रणम्य अवदत् - ''यस्मिन् दिने भवता स्पर्धायाः उद्घोषणं कारितं तस्मात् दिनात् अहम् उत्तमगुरोः कस्यचित् सकाशात् वीणावादनं पुनरपि अभ्यस्तवान् । इदानीम् अहं चिन्तयामि यत् एतां वीणां वादयितुं मम योग्यता स्यात् इति । यदि भवतः अनुज्ञा स्यात् तर्हि वीणां वादयेयम्'' इति ।

राजा उपहासमिश्रितस्वरेण -''अस्तु, तावत् वादयतु, वादयतु'' इति अवदत् ।

तृतीयः पुत्रः आसने उपविश्य इष्टदेवतायाः स्मरणं कृतवान् । ततः वीणावादनम् आरब्धवान् सः । अल्पे एव काले तस्य भ्रातरौ देवौ इव वस्त्रं धृत्वा सभां प्रविश्य मृदङ्गं शहनायीवाद्यं च वादयितुम् उद्युक्तौ जातौ । उभौ अपि अतिरमणीयतया तत् वादितवन्तौ । सभायाम् उपस्थिताः सर्वे करताडनं कृतवन्तः हर्षेण । सा च सङ्गीतसभा श्रवणरमणीया नयनरमणीया च आसीत् । सर्वे नेत्रे निमील्य सङ्गीतसुधायाः आस्वादने मग्नाः आसन् । यदा तैः नेत्रे उद्घाटिते तदा तौ पुरुषौ तत्र न आस्ताम्, वेदिकायां वीणावादकः एकः एव आसीत् ।

पूर्वकृतघोषणायाः अनुगुणं राजा तस्य युवकस्य सत्कारं कृतवान् । राजवैद्यद्वारा तदीयपितुः चिकित्सां कारयितुम् अनुज्ञाम् अपि दत्तवान् सः ।





# शान्तायाः उपायः

एवं नरेन्द्रः नाम कश्चन रूपवान् तरुणः आसीत् । तस्य मनसि इच्छा आसीत् यत् मां सर्वेऽपि महान्तं भावयेयुः, प्रशंसेयुः च इति । तदर्थमेव सः प्रभूतं धनम् आर्जितवान् । किन्तु एतादृशाः धनिकाः बहवः आसन् इति कारणतः एषः तेषु अन्यतमः अभवत् । अतः तस्य इच्छानुगुणं केऽपि प्रशंसां न कृतवन्तः एव ।

'किमपि साहसपूर्णं कार्यं कृतं चेत् जनाः मां महान्तं भावयेयुः' इति तेन चिन्तितम् । किन्तु अनेन यानि कार्याणि चिन्तितानि तादृशानि साहसमयकार्याणि अनेकानि पूर्वमेव अन्यैः कृतानि आसन् । अतः सः 'किं करोमि ?' इति चिन्तायां मग्नः ।

शान्तानाम्नी काचित् नरेन्द्रस्य दूरबन्धुः आसीत् । सा नरेन्द्रे अनुरागवती आसीत् । सा नरेन्द्रस्य विचारान् ज्ञातवती आसीत् । एकस्मिन् दिने सा नरेन्द्रम् उक्तवती - ''महत्त्वं स्वयमेव प्राप्यते । महत्त्वस्य अनुसरणं न उचितम् । भवान् मां परिणयतु । अहं भवन्तं महान्तं करिष्यामि'' इति ।

एतच्छ्रुत्वा नरेन्द्रः अपहसन्निव अवदत् - ''एवम् ! अहं भवतीं बहु इच्छामि । भवत्याः परिणयोऽपि मम इष्टः एव । भवती वदति - 'विवाहानन्तरं भवन्तं महान्तं करिष्यामि' इति । तर्हि तत् कार्यं विवाहात् पूर्वमेव करोतु । तथा भवति चेत् विवाहोऽपि शीघ्रमेव भविष्यति'' इति ।

तदा शान्तया उक्तम् - ''तर्हि शृणोतु । अहं भवन्तं कञ्चन योग्यम् उपायं सूचयामि । परन्तु भवता अहम् एव परिणेतव्या, न अन्या । तथा प्रतिज्ञा अपि करणीया भवता'' इति ।

नरेन्द्रस्तु किमपि अविचार्य तत्क्षणे उक्तवान् - ''अहं अन्यां परिणयेयम् इति चिन्तितवती वा भवती ? अहम् इदानीमेव वचनं ददामि, शपथमपि करोमि'' इति ।

''शपथस्य आवश्यकता नास्ति । ग्रामे सर्वत्र प्रचारं करोतु यत् अहं शान्तां बहु इच्छामि । अतः कठिनपरिस्थितौ अपि अन्यया सह मम विवाहः न भविष्यति इति'' इति उक्तवती शान्ता ।

तेन कुपितः नरेन्द्रः उक्तवान् - ''मयि भवत्याः विश्वासः नास्ति । अत एव भवती माम् एवं कर्तुं प्रेरयन्ती अस्ति'' इति ।

अनेन वचनेन दुःखिता शान्ता उक्तवती - ''एवं किमर्थं वदति भवान् ? मम उपायः एव एवमस्ति । तेनैव भवता महत्त्वं सम्पादयितुं शक्यते । मम वचनं शृणोतु । मयि विश्वसितु । मया उक्तेन प्रकारेण तादृशः प्रचारः एकमास-पर्यन्तं ग्रामे सर्वत्र प्रसृतः भवेत् । आगामिमासे अस्य देशस्य राजकुमारी पार्श्वस्थम् अरण्यं प्रति वनविहाराय आगमिष्यति । तदा भवान् तया सह स्थित्वा किमपि साहसमयकार्यं प्रदर्शयतु, येन कार्येण भवति तस्याः विश्वासः भवेत् । यदा विश्वासः उदेति तदा सा भवन्तं 'काऽपि प्रार्थना अस्ति चेत् वदतु' इति कथयिष्यति'' इति उक्त्वा कथनं मध्ये एव स्थगितवती शान्ता ।

तदा नरेन्द्रः कातरः सन् - ''अग्रे वदतु'' इति सानुरोधम् उक्तवान् ।

शान्ता कथनम् अनुवर्तितवती -''राज-कुमारी भवन्तं परिणेतुम् इच्छति । तदा भवान् तं विवाहप्रस्तावं निराकुर्यात् । एतं विषयं सर्वे जनाः ज्ञात्वा प्रशंसन्ति यत् नरेन्द्रः शान्तां प्राणेभ्योऽपि अधिकं मन्यते, अतः एव तेन राजकुमार्याः विवाहोऽपि तिरस्कृतः इति । अनेन भवान् कीर्तिं प्राप्स्यति'' इति ।



एवं सर्वम् उक्त्वा शान्ता पुनः उक्तवती - ''अस्मिन् जगति त्यागात् श्रेष्ठम् अन्यत् कार्यं नास्ति । अतः मम एषः उपायः निश्चयेन फलिष्यति'' इति ।

नरेन्द्रः सर्वं श्रुत्वा दीर्घं निःश्वस्य अवदत् - ''अनेन लघुकारणेन तावती प्रसिद्धिः भवेत् इति अहं न भावयामि । तथापि भवत्या सूचितः उपायस्तु उपेक्षार्हः न । अतः भवत्याः सूचनानुगुणम् अहं करिष्यामि'' इति ।

परेद्यवि सर्वे ग्रामजनाः ज्ञातवन्तः यत् नरेन्द्रः शान्तां प्राणेभ्योऽपि अधिकं मन्यते, अन्यां युवतिं सः कटाक्षेणापि द्रष्टुं न इच्छति इति ।

शान्ता एकस्मिन् दिने नरेन्द्रस्य समीपम् आगत्य उक्तवती - ''राजकुमारी श्वः समीपस्थं वनं प्रति आगमिष्यति । बुद्धिमत्तया आवाभ्यां



चिन्तितः उपायः यथा साकारः भवेत् तथा भवान् प्रयतेत । तत्र गमनसमये आत्मना सह एकं खड्गं नयति चेत् वरम्'' इति ।

शान्तायाः पितृव्यः कश्चित् राजास्थाने कार्यं करोति स्म । तेनैव राजपरिवारस्य रहस्यं शान्तया ज्ञातुं शक्यते स्म । नरेन्द्रोऽपि एतं विषयं जानाति एव । अतः सः निस्संशयः सन् परेद्यवि वनम् अगच्छत् ।

किञ्चिद्दूरं यदा गतं तदा तेन कस्याश्चित् स्त्रियाः आर्तनादः श्रुतः । सः धावन् तत्र गतः । तत्र कश्चन श्मश्रुलः खड्गं प्रदर्शयन् काञ्चित् सुन्दरीं भाययति स्म । नरेन्द्रः शीघ्रं खड्गं निष्काष्य तस्य श्मश्रुलस्य उपरि आक्रमणं कृतवान् । द्वयोः मध्ये युद्धम् अभवत् । किन्तु सः श्मश्रुलः नरेन्द्रस्य खड्गप्रहारं सम्मुखीकर्तुम् असमर्थः सन् ततः पलायितः ।

''महावीर ! समये आगत्य मां रक्षितवान् भवान् । अहम् अस्य देशस्य राजकुमारी । मम नाम शशिरेखा'' इति सा सुन्दरी स्वपरिचयम् उक्त्वा वनं प्रति आगमनस्य कारणमपि सविस्तरम् उक्तवती ।

स्ववृत्तान्तं सर्वं श्रावयित्वा सा नरेन्द्रं पुनः अवदत् - ''वीर ! सः श्मश्रुलः अस्माकं सेनायाः प्रधानखड्गवीरः । भवान् मां रक्षितुं तादृशं खड्गवीरं जितवान् । सः श्मश्रुलः भीत्या पलायितः इत्येतदेव वदति यत् भवान् कीदृशः वीरः इति । भवान् सुन्दरः, साहसिकः, पराक्रमी च । अहं श्वः भवतः गृहं प्रति रथं प्रेषयामि । मां भवान् परिणयतु । अस्य देशस्य राजा भूत्वा राज्यं सम्यक् परिपालयतु'' इति ।

नरेन्द्रः क्षणकालं निरुत्तरः अभवत् । सः मनसि एवम् अचिन्तयत् - 'शशिरेखा द्रष्टुं महासुन्दरी अस्ति । अपि च सा अस्य देशस्य राजकुमारी अपि । एतत्सर्वं मम भाग्यमेव' इति ।

अतः नरेन्द्रः स्वस्य शान्तायाः च प्रेमविषयं तां न उक्तवान् एव । तस्य मनः सन्तोषेण पूर्णम् अभवत् । 'अनेन महती कीर्तिः प्राप्तव्या इति मम इच्छा पूर्णा भविष्यति । अहम् अस्य देशस्य राजा अपि भविष्यामि' इति चिन्तयित्वा सः महता सन्तोषेण राजकुमारीम् अवदत् - ''भवत्याः वचनम् अनुल्लङ्घनीयम् । अतः भवत्याः इच्छानुगुणमेव भवतु'' इति ।

ततः नरेन्द्रः गृहम् आगतः । रात्रौ स्वप्नम् एकम् अपश्यत् सः । स्वप्ने सः तस्य देशस्य राजा भूत्वा सिंहासने उपविष्टः सन् सर्वैः

प्रणामान् स्वीकुर्वन् आसीत् । परेद्यवि नरेन्द्रस्य गृहस्य पुरतः कश्चन रथः आगतः । तस्मात् रथात् सः खड्गयुद्धं कृतवान् श्मश्रुलः, शशिरेखा च अवतीर्य साक्षात् गृहस्य अन्तः आगतवन्तौ । नरेन्द्रस्य पिता तौ दृष्ट्वा आश्चर्यचकितः अभवत् । सः श्मश्रुलः तम् उक्तवान् - ''वयं भवतः पुत्रेण सह विवाह-प्रस्तावं कर्तुम् आगताः'' इति ।

नरेन्द्रस्य पिता पृष्टवान् - ''महाभाग ! भवन्तौ कौ इति अहं ज्ञातुम् अर्हामि किम् ?'' इति ।

''यां भवतः पुत्रः प्राणेभ्योऽपि अधिकं मन्यते स्म तस्याः शान्तायाः पितृव्यः अस्मि अहम् । राजास्थाने अहं कार्यं करोमि । एतं ग्रामं प्रति अहं प्रथमवारम् आगतः । एषा मम पुत्री शशिरेखा । शान्तायाः सूचनायाः अनुगुणम् एषा भवतः पुत्रस्य परीक्षां कृतवती । भवतः पुत्रः तस्यां परीक्षायां स्वप्रतिज्ञां विस्मृतवान् । तस्य मनः डोलायमानम् अभवत् । तथापि शान्ता एतस्य एव परिणयम् इच्छति । वयम् एव विवाहं निश्चेतुम् आगताः । शान्तायाः मातापितरौ अपि अल्पे एव समये अत्र आगमिष्यतः'' इति ।

पितुः पार्श्वे स्थितः नरेन्द्रः एतत्सर्वं श्रुतवान् । लज्जया तस्य शिरः अवनतं जातम् । तद्दिने एव शान्तया सह तस्य विवाहः निश्चितः । ततः नरेन्द्रः शान्ताम् एकान्ते उक्तवान् - ''शान्ते, भवत्याः उपायं प्राप्य अहं कीर्तिशाली भवितुम् इष्टवान् । तथा न अभवत् । किन्तु मया सह परिणयः करणीयः इति निश्चितवत्याः भवत्याः इच्छा तु पूर्णा अभवत्'' इति ।

तदा शान्ता हसन्ती उक्तवती - ''सर्वे जनाः भावयन्ति यत् प्रसिद्धिः धनतः, प्रेमतः, शक्तितः वा प्राप्यते इति । अतः एव तादृश्याः प्रसिद्धेः प्राप्त्यर्थं ते प्रयतन्ते । किन्तु त्यागात् एव प्रसिद्धिः, न तु अन्यतः । एतत् दर्शयितुमेव अहम् एवं नाटकम् आरचितवती । अतः भविष्यत्कालेऽपि भवान् प्रसिद्धः भवितुं स्वप्नं मा पश्यतु । सुखेन वयं दाम्पत्यजीवनं यापयाम'' इति ।

भाविन्याः पत्न्याः बुद्धिमत्तां दृष्ट्वा सन्तुष्टः नरेन्द्रः ततः आरभ्य प्रसिद्धिः प्राप्तव्या इति विचारं परित्यक्तवान् ।





# आर्द्रवृष्टिः

माणिक्यवर्मा बेङ्गीदेशस्य राजा । तस्य आस्थाने कीर्तिसेनानाम्नी नर्तकी आसीत् । सा अनुपमसुन्दरी । तस्याः केशाः अपि अतीव सुन्दराः । राज्ये सर्वत्र तस्याः केशानां विचारः एव वार्तालापविषयः आसीत् । 'केशाः सन्ति चेत् एवमेव भवेयुः' इति वदन्ति स्म जनाः ।

अथ कदाचित् केनापि कारणेन तादृशानां केशानां पतनम् आरब्धम् । एतेन सा नर्तकी नितरां भीता अभवत् । राजवैद्यं दृष्ट्वा चिकित्सां कारितवती सा । तथापि किमपि प्रयोजनं न अभवत् । दिने दिने केशाः विरलतां गताः । तदा राजवैद्यः उक्तवान् - ''वत्से, कीर्तिसेने, रोगस्य चिकित्सा यदा फलप्रदा न भवति तदा देवः एव रक्षकः । अस्माकं राज्ये 'सुरपुर'नामके ग्रामे कश्चन शिवदेवालयः अस्ति । तत्रत्यं शिवलिङ्गं केशैः पूर्णम् अस्ति । अत एव सः 'कबरीलिङ्गेश्वरः' इति प्रसिद्धः । तादृशं कबरीलिङ्गेश्वरं भवती पूजयति चेत् भवत्याः मनोरथः पूर्णः भवेत्'' इति ।

राजवैद्यस्य सूचनानुगुणं राजनर्तकी तं शिवलिङ्गं प्रार्थितवती - ''कबरीलिङ्गेश्वर ! भवान् मम केशान् पूर्ववत् समृद्धान् करोति चेत्, अहं भवतः मन्दिरम् आगत्य देवालयस्य प्राङ्गणे नृत्यसेवां समर्पयिष्यामि'' इति ।

राजवैद्यस्य चिकित्सायाः परिणामतः, भगवतः कबरीलिङ्गेश्वरस्य महिमतः वा, तस्याः केशस्य रोगः अपगतः ! इदानीं तस्याः केशाः पूर्वापेक्षयापि अधिकसौन्दर्येण प्रकाशन्ते स्म । केशवर्धनमपि अभवत् । अतः कीर्तिसेना स्ववचनानुगुणं देवालये नर्तनं कर्तुम् इष्टवती । तदर्थं सा महाराजस्य अनुमतिं प्रार्थितवती ।

राजा तस्याः मुखतः सम्पूर्णविषयं ज्ञात्वा अवदत् - ''एतादृशस्य भक्तवत्सलस्य कबरीलिङ्गेश्वरस्य दर्शनम् अवश्यं करणीयम्'' इति । ततः सः अमात्यं प्रति - ''कीर्तिसेनायाः नर्तनार्थं व्यवस्था भवतु । तया सह अस्माकम् अपि गमनव्यवस्था भवतु'' इति उक्तवान् ।

कीर्तिसेनायाः नृत्यार्थं योग्या व्यवस्था

कबरीलिङ्गेश्वरदेवालये कल्पिता । तद्दिने राजा माणिक्यवर्मा देवस्य विशेषपूजामपि कृतवान् । किन्तु अनेन सामान्यजनानां परिस्थितिः कठिना अभवत् । भगवतः दर्शने तेषां प्रतिरोधः अभवत् ।

एवं देवदर्शनात् वञ्चिता दूरप्रदेशात् आगता काचित् सुन्दरीनाम्नी महिला उच्चस्वरेण - "महाराजः उपस्थितः चेत् देवदर्शने अस्माकं निवारणं किमर्थम् ? कबरीलिङ्गेश्वरस्य पुरतः अस्य का गणना ? महाराजः आदरपात्रम् एव इति तु सत्यम् । किन्तु सः कबरी-लिङ्गेश्वरस्य अपेक्षया महान् तु न । अहं प्रतिवर्षम् अस्मात् कबरीलिङ्गेश्वरात् उत्पन्नेन गङ्गाजलेन आर्द्रीभूय पुरुषत्वं प्राप्नोमि । अस्माकं जरठः वृषभोऽपि यौवनेन पूर्णः भवति । तादृशं दिनं पुनः भगवदनुग्रहात् एव भवेत् । अस्माकं वृषभे यौवनं भवेत् । मयि पुरुषत्वमपि भवेत् । अस्य राज्यस्य जनाः अस्माभिः पोषणीयाः । अतः स्वामिन् ! मन्दिरे प्रवेशं ददातु" इति अर्चकम् उक्तवती ।

महाराजः तस्याः वचनं श्रुत्वा तस्यै मन्दिरे प्रवेष्टुम् अनुमतिं दत्तवान् । तया सह तस्याः पतिरपि आगतः । तौ स्यूतेन आनीतं कार्पासं स्यूतात् निष्काश्य 'हर हर महादेव' इति वदन्तौ लिङ्गेश्वरं नमस्कृतवन्तौ । ततः तं कार्पासं ज्वालयित्वा पुनरपि शिवं साष्टाङ्गं नमस्कृत-वन्तौ । महाराजेन सूचना दत्ता यत् तयोः कार्ये कोऽपि प्रतिरोधः न करणीयः इति । ततः माणिक्यवर्मा पूजां कृतवान् । तेन सह तौ दम्पती अपि पूजां समापितवन्तौ ।

पूजायाः समापनानन्तरं महाराजः तां सुन्दरीं



पृष्टवान् - "पूजासमये भवतोः श्रद्धाभङ्गः न उचितः इत्यतः अहं तूष्णीम् अभवम् । भवती उन्मादिनी इव 'अहं पुरुषः भवामि, जरठे वृषभे यौवनम् आगतम्' इत्यादि आक्रोशनं कृतवती । गर्भगृहे भवद्भ्यां कार्पासः अपि ज्वालितः । एतत्सर्वं किमर्थं कृतम् ? अस्य तात्पर्यं किम् ?" इति ।

तदा सुन्दर्याः पतिः सविनयम् अवदत् - "महाराज, मम पत्नी न उन्मादिनी । तस्याः मुखतः आगतानि वचनानि न उन्मादवचनानि । अश्विनीतः आरभ्य रेवतीपर्यन्तं सप्तविंशत्यां नक्षत्रेषु सूर्यस्य प्रवेशतः जायमानां वर्षां वयं गणनया ज्ञास्यामः । प्रधानतया मृगशिरातः विशाखापर्यन्तं यानि द्वादश नक्षत्राणि सन्ति तेषां काले या वृष्टिः भवेत् सा भवति वा न वा इति, तस्याः वृष्ट्याः आधारेण कृषि-फलस्य लाभः, हानिः वा कियती इत्यादिकं वयं तर्कयामः । अस्मिन् वर्षे समीचीना वृष्टिः

अभवत् । मृगशिरानक्षत्रे या वृष्टिः आगता तेन जरठः वृषभोऽपि हलकर्षणं कृतवान् । रुद्रस्य जटातः आगता गङ्गा इव आर्द्रानक्षत्रे जातायां वृष्ट्यां मम पत्नी आर्द्रीभवन्ती पुरुषः इव क्षेत्रे कार्यं कृतवती । मम पत्नी यानि वचनानि उक्तवती तानि आर्द्रावृष्टेः मृगशिरा-वृष्टेः च सम्बद्धानि सन्ति । एषा मम पत्नी भवतः पुरतः उन्मादिनी इव व्यवहृतवती यत् तदर्थम् अहं क्षमां याचे'' इति ।

महाराजः माणिक्यवर्मा अनेन शान्तः सन् अवदत् - ''एतत् भवतु । परन्तु मन्दिरस्य गर्भगृहे कार्पासः ज्वालितः खलु ? तस्य अर्थः कः ?'' इति ।

तदा सुन्दर्याः पतिः अवदत् - ''महाराज ! पुष्यमासस्य सन्ध्याकाले हलस्य अग्रभागे विंशति'तुला'भारमितं कार्पासं बद्ध्वा केदारे हलं स्थापयामः वयम् । अनन्तरदिने उषसि एव गत्वा कार्पासं निष्पीडयामः । तदा यदि ततः जलं धारारूपेण पतति तर्हि निश्चितं यत् तस्मिन् वर्षे उत्तमा वृष्टिः भविष्यति इति । यदि जलं बिन्दुशः पतेत् तस्य तात्पर्यं यत् तस्मिन् वर्षे वृष्टिः न्यूना इति । एतस्याः परीक्षायाः अनन्तरम्, उत्तमा वृष्टिः भविष्यति वा न वेति ज्ञात्वा वयं तं कार्पासं ज्वालयित्वा शिवस्य पूजां करिष्यामः । एतस्मिन् वर्षे सा परीक्षा अद्यैव सम्पन्ना'' इति ।

राजा तस्य उत्तरेण अतीव सन्तुष्टः सन् अवदत् - ''आर्द्रावृष्टिविषयम् अहम् अधिकं न जानामि, किन्तु अस्मिन् मन्दिरे भवतः पत्नी पुरुषवत् मम दोषं प्रकटितवती । आर्द्रावृष्ट्यां आर्द्रीभवन्ती महिला अपि पुरुषः इव परिश्रमकार्यं करोति इत्यस्ति चेत् 'सर्वदा अस्माकं राज्ये तादृशी वृष्टिरेव भवतु' इति अहं भगवन्तं प्रार्थये । तेन मम देशे फलपुष्पाणां समृद्धिः भवेत्'' इति ।

राजनर्तक्याः कीर्तिसेनायाः नृत्यस्य समाप्त्यनन्तरं राजा सुन्दर्याः, तस्याः पत्युः च सत्कारं कृतवान् ।

तस्मात् वर्षात् आरभ्य वेङ्कीराज्ये यदा आर्द्रावृष्टिः भवति तदा न्यूनातिन्यूनम् एकं दिनं वा महिलाः क्षेत्रे अवश्यं कार्यं कुर्वन्ति अद्यापि ।





# इतिहासकारः

एकदा महेन्द्रगिरिराज्यं पुरन्दरनामकः शासकः परिपालयति स्म । सः राजनीतिनिपुणः । कलाविदां विषये तस्य महान् आदरः आसीत् । अतः सः यदा यदा अवसरः लभ्यते तदा तदा कलाकारान् पण्डितान् च पुरस्करोति स्म ।

एकदा राज्ञः पुरन्दरस्य सभां कश्चन विदेशीयः आगतवान् । तस्य नाम श्रीकण्ठः इति । इतिहासलेखनं तस्य प्रवृत्तिः । सः अनेकेषु देशेषु सञ्चारं कृत्वा सर्वत्र एकैकं वर्षं स्थित्वा तत्रत्यभाषायाः अभ्यासं कृत्वा तद्देशस्य इतिहासं लिखति स्म । एवं श्रीकण्ठः चतुर्दशभाषाः ज्ञात्वा पाण्डित्यं प्राप्तवान् आसीत् । चतुर्दशदेशानाम् इतिहासं रचितवान् आसीत् । तदनन्तरं सः महेन्द्रगिरिं प्रति आगतवान् आसीत् ।

एतादृशः महान् विद्वान् अस्माकं देशम् आगतवान् अस्ति इति ज्ञात्वा पुरन्दरः अत्यन्तं प्रसन्नः आसीत् । सः श्रीकण्ठम् उक्तवान् - ''भवान् मम नगरे वर्षं यावत् स्थित्वा अस्माकं देशस्य इतिहासं लिखतु । भवते यत् यत् आवश्यकं तत् व्यवस्थापयिष्यामि'' इति ।

उत्तररूपेण श्रीकण्ठः - ''महाराज ! तथैव भवतु । किन्तु मम एकं निवेदनम् अस्ति । भवान् माम् आप्तमन्त्रणाकारस्य स्थाने योजयतु । अहं सर्वदा भवता सह भविष्यामि । एतेन मम कार्यं सरलं भवति'' इति उक्तवान् ।

पुरन्दरः एतं प्रस्तावम् अङ्गीकृतवान् । श्रीकण्ठः राज्ञः आप्तमन्त्रणाकारः भूत्वा अधिकं समयं राज्ञा सह यापयति स्म । राज्ञा सह विहारसमये, मृगयायां, युद्धे च भवति स्म श्रीकण्ठः । एवं सः राज्ञः शासनविधानं सूक्ष्मरूपेण परिशीलयति स्म । नगरे सर्वे ज्ञातवन्तः यत् श्रीकण्ठः राज्ञः आप्तमन्त्रणाकारः इति । अतः सर्वे श्रीकण्ठे आदरवन्तः आसन् । नगरस्य धनिकाः,



वणिजः च विशेषभोजनम् आयोज्य तम् आह्वयन्ति स्म । श्रीकण्ठद्वारा अग्रे लाभः भवेत् इति तेषां विचारः आसीत् ।

महेन्द्रगिरिम् आगतवतः श्रीकण्ठस्य एकं वर्षम् अतीतम् । महेन्द्रगिरेः इतिहासलेखनम् अपि समाप्तप्रायम् आसीत् । एकदा राजा तम् अपूर्वं ग्रन्थम् आनाय्य पठितवान् । तत्र महेन्द्रगिरिराज्यस्य आचाराः, व्यवहाराः, जनानां हितार्थं राज्ञा कृताः परिष्करणोपायाः, महाराजस्य प्रजानां च मध्ये विद्यमानः विश्वासः, सहयोगः इत्यादयः सुन्दरतया वर्णिताः आसन् । किन्तु एकत्र लिखितम् आसीत् - ''अस्य देशस्य प्रजाः निष्कपटाः सन्ति । महाराजस्तु धर्मात्मा । राज्ञः सेवकानां राजभक्तिः अनुपमा । किन्तु अस्य देशस्य वणिजः, धनिकाः च अन्यायपूर्वकं धनार्जनं कृत्वा भ्रष्टाचारयुतं जीवनं यापयन्ति'' इति ।

अन्तिमं वाक्यं राज्ञे न अरोचत । सः श्रीकण्ठम् आहूय उक्तवान् - ''महापण्डित ! भवता लिख्यमानः ग्रन्थः उत्तमः अस्ति । किन्तु मम देशस्य वणिजां, धनिकानां च विषये स्वार्थिनः, भ्रष्टाः इति यत् लिखितं तत् सत्यम् इति न भाति'' इति ।

तदा श्रीकण्ठः अवदत् - ''मम लेखने दोषाः सन्ति चेत् क्षन्तव्यः अहम् । एतस्य ग्रन्थस्य समापनात् पूर्वं दोषान् परिष्करोमि । अनन्तरम् एव मम गमनम्'' इति ।

श्रीकण्ठस्य वचनानि श्रुत्वा राजा सन्तुष्टः अभवत् । परेद्यवि श्रीकण्ठः नगरस्य धनिकानां वणिजां च मेलनं कर्तुं गतवान् । तान् उद्दिश्य - ''राजा चक्रवर्तिने उपायनं प्रेषयितुम् इच्छति । अतः भवतां समीपे विद्यमानानाम् उत्तमानां रत्नानाम् आवलीं यच्छन्तु'' इति उक्तवान् । एवमेव श्रीकण्ठः केभ्यश्चित् सुवर्णं स्वीकृतवान् आसीत् । श्रीकण्ठः राज्ञः आप्तमित्रम् आसीत् इत्यतः सर्वेऽपि लक्षशः मूल्यस्य आभरणानि निस्सङ्कोचं तस्मै दत्तवन्तः । श्रीकण्ठः सङ्गृहीतानां वस्तूनाम् आवलीं कृत्वा वणिजां धनिकानां च हस्ताङ्कनं स्वीकृतवान् ।

परेद्यवि नगरे - ''श्रीकण्ठः पूर्वदिने रात्रौ नगरात् पलायनं कृतवान्'' इति वार्ता प्रसृता । अतः ते सर्वे वणिजः धनिकाः च राज्ञः समीपं गतवन्तः । ये पूर्वदिने श्रीकण्ठाय रत्नानि सुवर्णं च दत्तवन्तः आसन् ते आवलीं स्वीकृत्य राज्ञः समीपं गत्वा - ''महाराज, अस्मान् रक्षतु । भवतः आप्तमन्त्रणाकारः भवतः नामोल्लेखनं

कृत्वा अस्मान् लुण्ठितवान् अस्ति । भवान् तु धर्मात्मा अस्ति । कृपया अस्माकं हानिं पूरयतु भवान्'' इति प्रार्थितवन्तः ।

राजा चिन्ताक्रान्तः जातः । यतः तेन तादृशः आदेशः न दत्तः आसीत् । 'श्रीकण्ठः स्वबुद्ध्या एव सुवर्णं, रत्नानि च सङ्गृहीतवान् स्यात्' इति सः चिन्तितवान् । अतः सः कोषाध्यक्षम् आहूय – ''कस्मै कियत् दातव्यम् अस्ति इति आवलीं करोतु'' इति सूचितवान् ।

कोषाध्यक्षः सर्वेषां हस्ततः आवलीः स्वीकृत्य आहत्य कियत् दातव्यं भवेत् इति गणनां कृतवान् । तावत् धनं कोषे न आसीत् । तत् ज्ञात्वा राजा चिन्ताक्रान्तः अभवत् ।

तावता श्रीकण्ठः कञ्चित् महास्यूतं स्वीकृत्य तत्र उपस्थितः अभवत् । स्यूतं राज्ञः पुरतः संस्थाप्य एकाम् आवलीं राज्ञः हस्ते दत्त्वा – ''महाराज, मया येभ्यः यावत् स्वीकृतम् अस्ति तेषाम् आवली अत्र अस्ति । आवल्यां वणिजां हस्ताङ्कनानि अपि सन्ति । तदनुसारं तेषां वस्तूनि प्रत्यर्पयतु'' इति उक्तवान् ।

ये वणिजः श्रीकण्ठस्य विषये आरोपं कृतवन्तः आसन् ते श्रीकण्ठं दृष्ट्वा भीताः अभवन् । राज्ञः मुखात् वचनस्य निर्गमनात् पूर्वम् एव ते सर्वे राज्ञः पुरतः नतमस्तकाः भूत्वा – ''महाराज ! अस्माभिः भवते दत्तायाम् आवल्यां यदि दोषाः सन्ति तर्हि वयं क्षन्तव्याः । श्रीकण्ठः पलायनं कृतवान् अस्ति इति श्रुत्वा लोभेन वयम् आवल्याम् अधिकानि वस्तूनि योजितवन्तः'' इति प्रार्थितवन्तः ।

राजा वणिजां वस्तूनां प्रत्यर्पणं निराकृतवान् । किमपि अदत्त्वा एव सः तान् सर्वान् प्रेषितवान् । श्रीकण्ठस्य हस्तात् राजा स्यूतं स्वीकृत्य कोषाधिकारिणे दत्त्वा कोषे स्थापयितुं सूचितवान् । अनन्तरं सः श्रीकण्ठम् उद्दिश्य उक्तवान् – ''महापण्डित ! भवतः ग्रन्थे कोऽपि दोषः नास्ति । एतस्य अंशस्य प्रतिपादनार्थं भवते बहु परिश्रमः करणीयः अभवत्'' इति ।

तदा श्रीकण्ठः – ''महाराज, महाजनविषयकं सत्यांशं बहिरानेतुं परिश्रमः तु करणीयः एव । एषा अपि काचित् कला'' इति उत्तरं दत्तवान् ।

तदनन्तरं श्रीकण्ठः राज्ञः पुरन्दरात् पुरस्कारं प्राप्य अपरं देशं गतवान् ।






# चित्रशीर्षिकास्पर्धा





**उपरितनं चित्रद्वयं दृष्ट्वा परस्परसम्बन्धिवाक्यद्वयेन चित्रशीर्षिकां किं भवन्तः प्रेषयितुं शक्नुयुः ?**

समपत्रे लिखिता चित्रशीर्षिका अधस्तनसङ्केताय प्रेषणीया -

**चन्दमामा (संस्कृतम्) 'अक्षरम्' ८ उपमार्गः, गिरिनगरम्, बेङ्गलूरु - ५६००८५**

युक्ता शीर्षिका एतन्मासस्य २५ तः पूर्वं प्रेषणीया । सर्वश्रेष्ठायै शीर्षिकायै रू. १००/- पुरस्काररूपेण दास्यन्ते ।

पुरस्कृता शीर्षिका मासद्वयानन्तरं प्रकाशयिष्यते ।

## पुरस्कृतशीर्षिका





**दूरस्थस्य हि दर्शनम् ।**
**प्रेमशान्त्योः प्रदर्शनम् ।**

## अभिनन्दनानि

**'जनवरी' मासीयस्पर्धाशीर्षिकाप्रेषकः -**
**रामकृष्णः**
**२९७, एल्.ऐ.जि., ११ उपमार्गः**
**नवनगरम्, हुब्बळ्ळी - २५, कर्णाटकम्**

**चन्दमामायाः वार्षिकं ग्राहकशुल्कं -**

**भारते रू. १२० - ००**

Payment in favour of CHANDAMAMA INDIA LIMITED
No. 82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097

Printed and Published by B. Viswanatha Reddi at B.N.K. Press Pvt. Ltd., Chennai - 600 026 on behalf of Chandamama India Limited, No. 82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097. Editor : Viswam

# WHO SAYS SUMMER IS ALL SWEAT AND GRIME?

*Why should tempers rise along with temperatures?*

**SHRUG OFF THE BLAZING SUN!**

*Forget the parched throats!*




*Tushar and Trisha had a great holiday last summer. You might have read of it in Chandamama last May.*

*This May, they learn how to enjoy the Indian summer - the Indian way. Join them in their exciting adventures.*

**READ CHANDAMAMA'S SUMMER SPECIAL ISSUE, IN MAY 2002.**

*Chandamama's English edition from May, comes to you in a new format. More features, more fun.*

*Book your copies now!*

